[8]हलसयसहस्ससंकिट्ठविगिट्ठलट्ठपण्णत्तसेउसीमा [9]कुक्कुडसंडेयगामपउरा [10]उच्छु-जव-सालिकलिआ [11]गो-महिस-गवे-लगप्पभूया [11]आयारवंतचेइय-जुवइविसिट्ठसन्निविट्ठबहुला [12]उक्कोडिय-गाय-गंठिभेद-तक्कर-खंड-रक्खरहिया [13]खेमा [14]निरुवद्दवा [15]सुभिक्खा [16]वीसत्थसुहावासा [17]अणेगकोडिकोडुंबियाइण्णणिव्वुत्तसुहा [18]नड-नट्ट-जल्ल-मल्ल-मुट्ठिय-वेलंबग-कहग-पवग-लासग-आइक्खग-लंख-मंख—

---

७हलानां शतैः सहस्रैश्च संकृष्टा-विलिखिता विकृष्टा-नगर्या दूरवर्त्तिनी बहिर्वर्तिनीति भावः, लष्टा-मनोज्ञा प्राज्ञैः-छेकैराप्ता प्राज्ञाप्ताः-छेकपुरुषपरिकर्मिता इति भावः-सेतुसीमा कुल्याजलसेक्यक्षेत्रसीमा यस्याः सा हलशतसहस्रसंकृष्टविकृष्टलष्टप्राज्ञाप्तसेतुसीमा। ८कुक्कुटसम्पात्या ग्रामाः सर्वासु दिक्षु विदिक्षु च प्रचुरा यस्याः सा कुक्कुटसण्डेयग्रामप्रचुरा। ९इक्षु-यव-शालिकलिता। १०गावो-बलीवर्दाः महिषाः-प्रतीताः गावः-स्त्रीगव्यः एडकाः-उरभ्राः ते प्रभूता यस्यां सा तथा। ११आकारवन्ति-सुन्दराकाराणि चैत्यानि, युवतीनां च-पण्यतरुणीनामिति भावः—विशिष्टानि सन्निविष्टानि-सन्निवेशपाटका इति भावः-बहुलानि-बहूनि यस्यां सा तथा। १२उत्कोटा-लञ्चा तया चरन्ति उत्कोटिकास्तैः गात्रभेदैः-शरीरविनाशकारिभिः ग्रन्थिभेदैः-ग्रन्थिच्छेदैः तस्करैः खण्डरक्षैः-दण्डपाशिकैः रहिता, अनेन तत्रोपद्रवकारिणामभावमाह। १३'क्षेमा' अशिवाभावात्। १४निरुपद्रवा राजादिकृतोपद्रवाभावात्। १५सुभिक्षा भिक्षुकाणां भिक्षायाः सुलभत्वात्। १६विश्वस्तसुखावासा-विश्वस्तो-निर्भयः सुखमावासो लोकानां यस्यां सा तथा। १७ अनेककोटीभिः-अनेककोटिसंख्याकैः कौटुम्बिकैराकीर्णा निर्वृत्ता सन्तुष्टजनयोगात् शुभा शुभवस्तूपेतत्वात्, ततः पदत्रयस्य कर्मधारयः। १८नटा-नाटयितारः, नर्त्तका ये नृत्यन्ति, जल्लाः-राज्ञः स्तोत्रपाठकाः, मल्लाः प्रतीताः मौष्टिका-मल्ला एव ये मुष्टिभिः प्रहरन्ति, विडम्बकाः-विदूषकाः, कथकाः-प्रतीताः,

तूणइल्ल-तुंबवीणिय-अणेगतालाचराणुचरिया [१९]आराम-उज्जाण-अगड-तलाग-दीहिय-वप्पिणगुणोववेया [२०]उं-व्विद्धविउलगंभीरखात-फलिहा [२१]चक्क-गय-मुसंढि-ओरोह-सयग्घि-जमलकवाडघणदुप्पवेसा [२२]धणुकुडिलवंक-पागारपरिक्खित्ता [२३]कविसीसयवट्टरइयसंठियविरायमाणा [२४]अट्टालय-[illegible]-गोपुर-तोरण-उन्नय-सुवि-

प्लवका-ये उत्प्लवन्ते नद्यादिकं वा तरन्ति, लासकाः-ये रासकान् गायन्ति, जयशब्दप्रयोक्तारो वा भाण्डा इत्यर्थः, आख्यायिकाः-ये शुभाशुभमाख्यान्ति, लङ्खाः-महावंशाग्रखेलकाः, मङ्खाः-चित्रफलकहस्ता भिक्षुकाः, 'तूणइल्ल'-तूणाभिधानवाद्यविशेषवन्तः, तुम्बवीणिकाः-तुम्बवीणावादकाः अनेके च ये तालाचराः-तालादानेन प्रेक्षाकारिणः, एतैः सर्वैरनुचरिता-आसेविता या सा तथा। १९आरामाः यत्र माधवीलतागृहादिषु दम्पत्यादीनि आगत्य रमन्ते,उद्यानानि-पुष्पादिमद्वृक्षसंकुलानि उत्सवादौ बहुजनभोग्यानि,'अगड'त्ति-अवटाः कूपाः तडाकानि-प्रतीतानि, दीर्घिकाः-सारिण्यः, 'वप्पिण'त्ति-केदाराः, एते गुणोपपेता-रम्यतादिगुणोपपेता यस्यां सा तथा। २०उव्विद्धं-उण्डम् विउलं- विस्तीर्णम् गम्भीरम्-अलब्धमध्यम् खातम्-उपरिविस्तीर्णम् अधःसङ्कुचितम् परिखा च-अध उपरि च समखातरूपा यस्यां सा तथा २१चक्राणि-प्रहरणविशेषरूपाणि, गदाः-प्रहरणविशेषाः, मुषण्ढयोऽप्येवंरूपाः, अवरोधः-प्रतोलीद्वारेष्वन्तः-प्राकारः सम्भाव्यते, शतघ्न्यो-महायष्टयो महाशिला वा याः पातिताः शतानि पुरुषाणां घ्नन्ति, यमलानि-समस्थितद्रव्यरूपाणि यानि कपाटानि घनानि च-निश्छिद्राणि तैर्दुष्प्रवेशा या सा तथा। २२'धणुकुडिल' कुटिलं धनुस्ततोऽपि वक्रेण प्राकारेण परिक्षिप्ता या सा तथा। २३कपिशीर्षकैर्वृत्तरचितसंस्थितैः-वर्तुलकृतसंस्थानैर्विराजमाना-शोभमाना या सा तथा। २४ अट्टालकाः-प्राकारोपरिभृत्याश्रयविशेषाः चरिका अष्टहस्तप्रमाणो मार्गः द्वाराणि-भवन-देवकुलादीनाम् गोपुराणि-प्राकारद्वाराणि तोरणानि च उन्नतानि-उच्चानि यस्यां सा तथा,

भत्तरायमग्गा [२५]छेयायरियरइयदढफलिह-इंदकीला [२६]विवणि-वणिच्छित्त-सिप्पिआइण्णनिव्वुयसुहा [२७]सिंघाडग-तिय-चउक्क-चच्चर-पणियापणविविहवत्थुपरिमंडिया [२८]सुरम्मा [२९]नरवइ-पविइण्णमहिवइपहा [३०]अणेगवरतुरग-मत्तकुंजर-रहपहकर-सीय-संदमाणीआइण्णजाणजोग्गा [३१]विमउलनवनलिणसोभियजला [३२]पंडुरवरभवणपंति-

सुविभक्ताः-विविक्ताः राजमार्गा यस्यां सा तथा। ततः पदद्वयस्य कर्मधारयः। २५छेकेन-निपुणेन आचार्येण-शिल्पोपाध्यायेन रचितो दृढः-बलवान् परिघः-अर्गला इन्द्रकीलश्च-संपाटितकपाटद्वयाधारभूतः प्रवेशमध्यभागो यस्यां सा तथा। २६विपणीनां-वणिक्पथानां हट्टमार्गाणाम् वणिजां च क्षेत्रं-स्थानं सा विपणिवणिक्क्षेत्रं तथा शिल्पिभिः कुम्भकारादिभिर्निर्वृतैः-सुखिभिः शुभैः-स्वस्वकर्मकुशलैराकीर्णा। प्राकृतत्वाच्च सूत्रेऽन्यथा पदोपन्यासः ततः पूर्वपदेन कर्मधारयः। २७शृङ्गाटकत्रिकचतुष्कचत्वरैः पणितानि-क्रयाणकानि तत्प्रधानेषु आपणेषु यानि विविधानि वस्तूनि-द्रव्याणि तैश्च परिमण्डिता। शृङ्गाटकम्-त्रिकोणं स्थानम्, त्रिकम्-यत्र रथ्यात्रयं मिलति, चतुष्कम्-रथ्याचतुष्कमीलनात्मकम्, चत्वरम्-बहुरथ्यापातस्थानम्। २८सुरम्या-अतिरम्या। २९नरपतिना-राज्ञा प्रविकीर्णो-गमनागमनाभ्यां व्याप्तो महीपतिपथो-राजमार्गो यस्यां सा तथा। ३०अनेकैर्वरतुरगाणाम्, मत्तकुञ्जराणाम्, रथानां च पहकरैः-सङ्घातैः तथा शिबिकाभिः स्पन्दमानीभिः यानैः युग्यैश्च आकीर्णा-व्याप्ता या सा तथा। आकीर्णशब्दस्य मध्यनिपातः प्राकृतत्वात्। तत्र शिबिकाः कूटाकारेणाच्छादिता जम्पानविशेषाः, स्पन्दमानिकाः-पुरुषप्रमाणा जम्पानविशेषाः, यानानि-शकटादीनि, युग्यानि-गोल्लविषयप्रसिद्धानि द्विहस्तप्रमाणानि वेदिकोपशोभितानि जम्पानान्येव। ३१विमुकुलैः-विकसितैर्नवैर्नलिनैः-कमलैः शोभितानि जलानि यस्यां सा तथा।
३२ पाण्डुरवरभवनपङ्क्तिमहिता ।

महिया [33]उत्ताणयनयणपिच्छणिज्जा] [34]पासादीया [35]दरिसणिज्जा [36]अभिरूवा [37]पडिरूवा।

[२] [1]तीसे णं [2]आमलकप्पाए नयरीए [3]बहिया [4]उत्तरपुरत्थिमे दिसीभाए [5]अंबसालवणे नामं [6]चेइए [7]होत्था-[❀चिराईए पुव्वपुरिसपण्णत्ते पोराणे सद्दिए कित्तिए नाए सच्छत्ते सज्झए सघंटे सपडागे पडागाइपडागमंडिए सलोमहत्थे कयवेयड्डिए लाइयउल्लोइयमहिए गोसीससरसरत्तचंदणददरदिण्णपंचंगुलितले उवचियचंदणकलसे

'अंबसालवण' चैत्यस्य वर्णनम्

॥७॥

३३उत्तानकनयनप्रेक्षणीया इति सुगमम्। ३४प्रासादेषु भवा प्रासादीया-प्रासादबहुला इत्यर्थः। अत एव ३५दर्शनीया द्रष्टुं योग्या, प्रासादानामतिरमणीयत्वात्। तथा ३६अभि द्रष्टॄन् प्रति प्रत्येकमभिमुखमतीव चेतोहारित्वात् रूपम्-आकारो यस्याः सा अभिरूपा। एतदेव व्याचष्टे-३७प्रतिरूपा प्रतिविशिष्टम्-असाधारणम् रूपम्-आकारो यस्याः सा प्रतिरूपा॥

[२] १ तस्यां 'णं' इति पूर्ववत्। २ आमलकल्पायां नगर्यां ३ बहिः ४ उत्तरपौरस्त्ये-उत्तरपूर्वारूपे ईशानकोणे-इत्यर्थः-दिग्-भागे। ५ 'अम्बसालवणे' इति आम्रैः शालैश्च अतिप्रचुरतयोपलक्षितं यद् वनं तद् आम्रशालवनम् तद्योगात् चैत्यमपि आम्रशालवनम् ६ चितेः-लेप्यादिचयनस्य भावः कर्म वा चैत्यम् तच्च इह संज्ञाशब्दत्वात् देवताप्रतिबिम्बे प्रसिद्धम् ततस्तदाश्रयभूतं यद् देवताया गृहं तदप्युपचारात् चैत्यम् तच्चेह व्यन्तरायतनं द्रष्टव्यम् न तु भगवतामर्हतामायतनम्। ७ होत्थ'त्ति अभवत्। तच्च किंविशिष्टमित्याह-

❀चिरातीतम् पूर्वपुरुषप्रज्ञप्तम् पुराणम् शब्दितम् कीर्तितम् ज्ञातम् सच्छत्रम् सध्वजम् सघण्टम् सपताकम् पताकातिपताकामण्डितम् सलोमहस्तम् कृतवितर्दिकम् +लाइय-उल्लोइय-महिय गोशीर्षसरसरक्तचन्दनदर्दरदत्तपञ्चाङ्गुलितलम् उपचितचन्दनकलशम् चन्दनघटसुकृततोरणप्रतिद्वारदेशभागम्

+ "लाइयं भूमेश्छगणादिना उपलेपनम् उल्लोइयं कुड्यमालाना सेटिकादिभिः समृष्टीकरणम् ततस्ताभ्या महितम्-पूजितम् तत् लाइय-

चंदणघडसुकयतोरणपडिदुवारदेसभाए आसित्तोसित्तविउलवट्टवग्घारियमल्लदामकलावे पंचवण्णसरससुरभिमुक्कपुप्फपुंजोवयारकलिए कालागुरु-पवरकुंदुरुक्क-तुरुक्कधूवमघमघंतगंधुद्धूयाभिरामे सुगंधवरगंधगंधिए गंधवट्टिभूए णड-णट्टग-जल्ल-मल्ल-मुट्ठिय-वेलंबग-पवग-कहग-लासग-आइक्खग-लंख-मंख-तूणइल्ल-तुंबवीणिय-भुयग-मागहपरिगए बहुजण-जाणवयस्स विस्सुयकित्तिए बहुजणस्स आहुस्स आहुणिज्जे पाहुणिज्जे अच्चणिज्जे वंदणिज्जे नमंसणिज्जे पूयणिज्जे सक्कारणिज्जे सम्माणणिज्जे कल्लाणं मंगलं देवयं चेइयं विणएणं पज्जुवासणिज्जे दिव्वे सच्चे सच्चोवाए जागसहस्सभागपडिच्छए बहुजणो अच्चेइ आगम्म अंबसालवणचेइयं अंबसालवणचेइयं]

८ 'चिरातीते पुराणे' यावच्छब्दकरणात् 'सद्दिए कित्तिए नाए सच्छत्ते सज्झए' इत्यादि-औपपातिकग्रन्थप्रसिद्धवर्णकपरिग्रहः* ।

आसिक्तावसिक्तविपुलवृत्तलम्बमानमाल्यदामकलापम् पञ्चवर्ण-सरससुरभिमुक्तपुष्पपुञ्जोपचारकलितम् कालागुरु-प्रवरकुन्दुरुक्क-तुरुष्कधूपमघमघायमान-गन्धोद्धूताभिरामम् सुगन्धवरगन्धगन्धितम् गन्धवर्तिभूतम् नट-नर्तक-जल्ल-मल्ल-मौष्टिक-विडम्बक-प्लवक-कथक-रासक-आख्यायक-लङ्ख-मङ्ख-तूणिक-तुम्बवीणिक-भुजग (भुजगा भोगिनः) मागधपरिगतम् बहुजन-जानपदस्य विश्रुतकीर्तितम् बहुजनस्य आहोतुः आहवनीयम् प्राहवनीयम् अर्चनीयम् वन्दनीयम् नमस्यनीयम् पूजनीयम् सत्कारणीयम् सम्माननीयम् कल्याणम् मङ्गलम् देवतम् चैत्यम् (इव) विनयेन पर्युपासनीयम् दिव्यम् सत्यम् सत्योपायम् यागसहस्रभागप्रतीच्छकम् बहुजनः अर्चति आगम्य आम्रशालवनचैत्यम् आम्रशालवनचैत्यम्।

उल्लोइय-महियं"—औपपातिकवृत्तिः * विवरणकारनिर्दिष्टः एष चैत्यवर्णकपरिग्रहः औपपातिकग्रन्थमाश्रित्य इह मूले एव संकलितः।

*[से[1] णं अंबसालवणे चेइए एगेणं महया वणसंडेणं सव्वओ समंता संपरिक्खित्ते। से णं वणसंडे किण्हे किण्होभासे नीले नीलोभासे हरिए हरिओभासे सीए सीओभासे णिद्धे णिद्धोभासे तिव्वे तिव्वोभासे, किण्हे किण्हच्छाए नीले नीलच्छाए हरिए हरियच्छाए सीए सीअच्छाए णिद्धे णिद्धच्छाए तिव्वे तिव्वच्छाए घणकडिअकडिच्छाए रम्मे महामेहणिकुरंबभूए पासाइए[2] दरिसणिज्जे[3] अभिरूवे पडिरूवे ]।



एवंरूपं च चैत्यवर्णकमुक्त्वा वनखण्डवक्तव्यता वक्तव्या। सा चैवं–१ 'से णं अंबसालवणे चेइए एगेणं महया वणसंडेणं सव्वओ समंता संपरिक्खित्ते, से णं वणसंडे किण्होभासे'इत्यादि यावत् 'पासाइए दरिसणिज्जे अभिरूवे पडिरूवे'। तत्र २ प्रसादीयम्–कृष्णावभासत्वादिना गुणेन मनःप्रसादहेतुत्वात् ३ दर्शनीयं चक्षुरानन्दहेतुत्वात् ४ अभिरूपप्रतिरूपशब्दार्थः प्राग्वत्, तत उक्तम्–'जाव पडिरूवे'।

* तद् आम्रशालवनं चैत्यम् एकेन महता वनसण्डेन सर्वतः समन्तात् सपरिक्षिप्तम्। स वनसण्डः कृष्णः कृष्णावभासः नीलः नीलावभासः हरित. हरितावभासः शीतः शीतावभासः स्निग्धः स्निग्धावभासः तीव्रः तीव्रावभासः कृष्णः कृष्णच्छायः नीलः नीलच्छाय. हरित' हरितच्छायः शीतः शीतच्छायः स्निग्धः स्निग्धच्छायः तीव्र. तीव्रच्छायः ×घणकडिअकडिच्छाए रम्यः महामेघनिकुरम्बभूतः प्रतिरूपः।

× "अन्योन्य शाखानुप्रवेशाद् बहलनिरन्तरच्छायः"–औ० वृ०।

'असोगवरपायव' वर्णनम्

[३] [ [1]तस्स णं [2]वणसंडस्स [3]बहुमज्झदेसभाए [4]एत्थ णं [5]महं [6]एगे] [7]असोगवरपायवे [[8]पन्नत्ते [9]कुरुग्गयकंदमूल-वट्ट-लट्ठसंधि-असिलिट्ठे [10]घण-मसिण-सिणिद्ध-अणुपुव्विसुजाय-निरुवहत-उव्विद्ध-पवरखंधे [11]अणेगणरप-

---

[३] अशोकवरपादपस्य पृथिवीशिलापट्टकस्य च वक्तव्यता औपपातिकग्रन्थानुसारेण ज्ञेया+। अस्या व्याख्या-१तस्य 'णं'इति पूर्ववत् २ वनखण्डस्य ३बहुमध्यदेशभागे ४अत्र एतस्मिन् प्रदेशे ५ महान् ६ एकः ७ अशोकवरपादपः ८ प्रज्ञप्तस्तीर्थकर-गणधरैः। स च किम्भूतः ? इत्याह-'जाव पडिरूवे' अत्र 'यावत्' शब्देन ग्रन्थान्तरप्रसिद्धं विशेषणजातं - सूचितम्। ९ दूरम् उत्-प्राबल्येन गतं कन्दस्याधस्तात् मूलं यस्य स दूरोद्गतकन्दमूलः तथा वृत्तभावेन परिणतः-एवं नाम सर्वासु दिक्षु विदिक्षु च शाखाभिः प्रशाखाभिश्च प्रसृतो यथा वर्तुलः प्रतिभासते इति, तथा लष्टाः-मनोज्ञाः सन्धयः-शाखागता यस्य स लष्टसन्धिः तथा अश्लिष्टः-अन्यैः पादपैः सहासम्पृक्तः-विविक्त इत्यर्थः। ततो विशेषणसमासः स च पदद्वयमीलनेनावसेयः बहूनां पदानां विशेषणसमासानभ्युपगमात्। तथा १० घनः-निबिडः, मसृणः-कोमलत्वक् न कर्कशस्पर्शः, स्निग्धः-शुभकान्तिः, आनुपूर्व्या-मूलादिपरिपाट्या सुष्ठु जन्मदोषरहितं यथा भवति एवं जातः आनुपूर्वीसुजातः, तथा निरुपहतः-उपदेहिकाद्युपद्रवरहितः, उद्विद्धः-उच्चः,प्रवरः-प्रधानः स्कन्धो यस्य स घनमसृणस्निग्धानुपूर्वीसुजातनिरुपहतोद्विद्धप्रवरस्कन्धः। तथा ११ अनेकस्य नरस्य-मनुष्यस्य ये प्रवराः-प्रलम्बा भुजाः-बाहवः तैरग्राह्यः-अपरिमेयः अनेकनरप्रवरभुजाग्राह्यः-अनेकपुरुषव्यामैरपि अप्रतिमेयस्थौल्य इत्यर्थः। तथा

---

+ सा च वक्तव्यता औपपातिकग्रन्थमाश्रित्य अत्रैव मूले संयोजिता। - विवरणकारसूचितं ग्रन्थान्तरप्रसिद्धं विशेषणजातम् मूलेन सह निवेशितम्।

वरभुयअगेज्झे, [13]कुसुमभरसमोणमंत-पत्तल-विसाल-साले [14]महुकरि-भमरगण-गुमगुमाइय-णिलिंत-उड्डेंतस-स्सिरीए [15]णाणासउणगणमिहुणसुमहुर-कण्णसुह-पलत्त-सद्दमहुरे [16]कुसविकुसविसुद्धरुक्खमूले [17]पासादीए [18]दरि-

१३कुसुमभरेण-पुष्पसम्भारेण सम्-ईषदवनमन्त्यः पत्रसमृद्धाः-§"पत्तसमिद्धं तिक्खं च पत्तलं"[ ]इति वचनात्-विशालाः-विस्तीर्णाः शालाः-शाखा यस्य स कुसुमभरसमवनमत्पत्रलविशालशालः। तथा १४ मधुकरीणां भ्रमराणां च ये गणाः 'गुमगुमायिता' गुमगुमायन्ति स्म-कर्मकर्तृत्वात् कर्तरि 'क्त' प्रत्ययः-गुमगुमेति शब्दं कृतवन्तः सन्त इत्यर्थः, निलीयमानाः-आश्रयन्तः उड्डीयमानाः-तत्प्रत्यासन्नमाकाशे परिभ्रमन्तः तैः सश्रीकः मधुकरीभ्रमरगणगुमगुमायितनिलीयमानोड्डीयमानसश्रीकः। तथा १५ नानाजातीयानां शकुनगणानां यानि मिथुनानि-स्त्रीपुंसयुग्मानि तेषां प्रमोदवशतो यानि परस्परसुमधुराणि अत एव कर्णसुखानि-कर्णसुखदायकानि प्रलप्तानि-भाषणानि-शकुनगणानां हि स्वेच्छया क्रीडतां प्रमोदभरवशतो यानि भाषणानि तानि 'प्रलप्तानि' इति प्रसिद्धानि ततः 'पलत्त'इत्युक्तम्-तेषां यः शब्दो-ध्वनिः तेन मधुरः नानाशकुनगणमिथुनसुमधुरकर्णसुखप्रलप्तशब्दमधुरः। तथा १६ कुशा-दर्भादयः विकुशा-वल्वजादयः तैर्विशुद्धं-रहितं वृक्षस्य-सकलस्याशोकपादपस्य—इह मूलं शाखादीनामपि आदिमो भागो लक्षणया प्रोच्यते यथा 'शाखामूलमिदम्' 'प्रशाखामूलमिदम्' इत्यादि ततः सकलाशोकपादपसत्कमूलप्रतिपत्तये वृक्षग्रहणम्—मूलं यस्य स कुशविकुशविशुद्धवृक्षमूलः १७ यश्चैवंविधः स द्रष्टॄणां चित्तसन्तोषाय भवति, तत आह-प्रासादीयः-प्रसादाय-चित्तसन्तोषाय-हितः तदुत्पादकत्वात् प्रासादीयः। १८

§ "पत्तसमिद्ध पत्तल"-पाइअलच्छीनाममाला अङ्क ३४८। "पत्तल-पड्डवइया पत्तिसमिद्ध चेव तिक्खम्मि"-देशीनाममाला वर्ग ६ गा० १४।

सणिज्जे [१९]अभिरूवे [२०]पडिरूवे]

[से णं [१]असोगवरपायवे अन्नेहिं बहूहिं [२]तिलएहिं लउएहिं छत्तोवगेहिं सिरीसेहिं सत्तवण्णेहिं दधिवन्नेहिं लोद्देहिं धवेहिं चंदणेहिं अज्जुणेहिं नीवेहिं कयंबेहिं फणसेहिं दाडिमेहिं तालेहिं तमालेहिं पियालेहिं पियंगूहिं रायरुक्खेहिं जाव नंदिरुक्खेहिं सव्वओ समंता संपरिक्खित्ते। [३]ते णं तिलगा जाव नंदिरुक्खा कुसविकुसविसुद्धरुक्खमूला [४]मूलमंतो [५]कंदमंतो जाव [६]खंधिमन्तो [७]तयामन्तो [८]सालमन्तो [९]पवालमन्तो [१०]पत्तमन्तो-पुप्फमन्तो-

—अत एव दर्शनीयो—द्रष्टुं योग्यः। कस्मादित्याह १९ अभिरूपः द्रष्टारं द्रष्टारं प्रति—अभिमुखं न कस्यचिद् विरागहेतू रूपम्—आकारो यस्यासावभिरूपः एवंरूपोऽपि कुतः ? इत्याह २० प्रतिरूपः—प्रतिविशिष्टम् सकलजगदसाधारणं रूपं यस्य स प्रतिरूपः।

१ 'से णं असोगवरपायवे' इत्यादि 'जाव नंदिरुक्खेहिं' इत्यत्र *यावच्छब्दकरणात् २एते च तिलक—लवक—च्छत्रोपग—शिरीष—सप्तपर्ण—दधिपर्ण—लुब्धक—धव—चन्दन—अर्जुन—नीप—कदम्ब—फनस-दाडिम—ताल—तमाल—प्रियाल—प्रियङ्गु—राजवृक्ष-नन्दिवृक्षाः प्रायः सुप्रसिद्धाः। ३ 'ते णं तिलगा जाव नंदिरुक्खा कुसविकुस'इत्यादि। ते तिलका यावन्नन्दिवृक्षाः कुशविकुशविशुद्धवृक्षमूलाः। अत्र व्याख्या पूर्ववत्। ४ मूलवन्तः मूलानि प्रभूतानि दूरावगाढानि च सन्त्येषामिति मूलवन्तः। ५कन्दः एषामस्तीति कन्दवन्तः। *यावच्छब्दकरणात्। अस्य व्याख्या—इह मूलानि सुप्रतीतानि यानि कन्दस्याधः प्रसरन्ति, कन्दास्तेषां मूलानामुपरिवर्तिनस्ते अपि प्रतीताः। ६खंधी—थुडम् ७त्वक्—छल्ली ८शालाः—शाखाः ९ प्रवालः—पल्लवाङ्कुरः १०पत्रपुष्पफलबीजानि सुप्रसिद्धानि। सर्वत्रातिशयेन क्वचिद्

* अत्र 'यावत्' शब्देन यत् सूचितम् तदत्र मूले एव स्थापितम्।

फलमन्तो–बीयमन्तो [1]अणुपुव्विसुजायरुइलवट्टभावपरिणया [2]एगखंधी [3]अणेगसाहप्पसाहविडिमा [4]अणेगनरवाम-सुप्पसारियअगिज्झघणविपुलवट्टखंधा [5]अच्छिद्दपत्ता [6]अविरलपत्ता [7]अवाईणपत्ता

भूम्नि वा 'मतुप्' प्रत्ययः। १ आनुपूर्व्या–मूलादिपरिपाट्या सुष्ठु जाता आनुपूर्वीसुजाताः रुचिराः–स्निग्धतया देदीप्यमानच्छविमन्तः तथा वृत्तभावेन परिणता वृत्तभावपरिणताः, किमुक्तं भवति?–एवं नाम सर्वासु दिक्षु विदिक्षु च शाखाभिः प्रशाखाभिश्च प्रसृता यथा वर्त्तुलाः संजाता इति, आनुपूर्वीसुजाताश्च ते रुचिराश्च आनुपूर्वीसुजातरुचिराः ते च ते वृत्तभावपरिणताश्च आनुपूर्वीसुजातरुचिरवृत्तभावपरिणताः ते तथा। २ तिलकादयः पादपाः प्रत्येकमेकस्कन्धाः, प्राकृते *चास्य स्त्रीत्वमिति 'एगखंधी' इति सूत्रपाठः। ३ तथा अनेकाभिः शाखाभिः प्रशाखाभिश्च मध्यभागे विटपः–विस्तारो येषां ते तथा। ४ तिर्यग् बाहुद्वयं प्रसारणप्रमाणो व्यामः–व्यामीयन्ते परिच्छिद्यन्ते रज्ज्वादि अनेनेति व्यामः—बहुलवचनात् करणे "क्वचित्" [५–१–१७१ हैमश०] इति 'ड'प्रत्ययः–अनेकैर्नरव्यामैः–पुरुषव्यामैः सुप्रसारितैरग्राह्यः अप्रमेयः घनो–निबिडो विपुलः–विस्तीर्णो वृत्तस्कन्धो येषां ते अनेकनरव्यामसुप्रसारिताग्राह्यघनविपुलवृत्तस्कन्धाः। तथा ५ अच्छिद्राणि पत्राणि येषां ते अच्छिद्रपत्राः–किमुक्तं भवति?–न तेषां पत्रेषु वातदोषतः कालदोषतो वा गड्डरिकादिरीति+रुपजातो येन तेषु पत्रेषु छिद्राण्यभविष्यन्नित्यच्छिद्रपत्राः अथवा एवं नाम अन्योऽन्यं शाखाप्रशाखानुप्रवेशात् पत्राणि पत्राणामुपरि जातानि येन मनागपि अपान्तरालरूपं छिद्रं नोपलक्ष्यते इति। तथा चाह–६ 'अविरलपत्ता' इति, अत्र हेतौ प्रथमा, ततोऽयमर्थः–यतः अविरलपत्रा अतोऽच्छिद्रपत्राः। अविरलपत्राः इत्यपि कुतः? इत्याह–७ अवातीनपत्राः वातीनानि–वातोपहतानि–

* अस्य 'खंध' शब्दस्य। + अतिवृष्टि–अनावृष्टिप्रमुखोपद्रवविशेषः ईतिः।

अणईइपत्ता [2]निद्धूयजरढपंडुपत्ता [3]नवहरियभिसंतपत्तभारंधयारगंभीरदरिसणिज्जा [4]उवनिग्गयनयतरुणपत्त-पल्लवकोमलउज्जलचलंतकिसलसुकुमालपवालसोभियपवरवरंकुरग्गसिहरा [5]निच्चं [6]कुसुमिया

---

वातेन पातितानीत्यर्थः, न वातीनानि अवातीनानि पत्राणि येषां ते तथा–किमुक्तं भवति ?–न प्रबलेन खरपरुषेण वातेन तेषां पत्राणि भूमौ निपात्यन्ते, ततोऽवातीनपत्रत्वादविरलपत्रा इति अच्छिद्रपत्रा इति। १ 'अच्छिद्रपत्राः' इत्यत्र प्रथमव्याख्यानपक्षमधिकृत्य हेतुमाह–'अणईइपत्ता' न विद्यते ईतिः–गड्डरिकादिरूपा येषां तानि अनीतीनि, अनीतीनि पत्राणि येषां ते अनीतिपत्राः, अनीतिपत्रत्वाच्च अच्छिद्रपत्राः। २ निर्द्धूतानि–अपनीतानि जरठानि पाण्डुपत्राणि येभ्यस्ते निर्द्धूतजरठपाण्डुपत्राः–किमुक्तं भवति ?–यानि वृक्षस्थानि जरठानि पाण्डुपत्राणि वातेन निर्द्धूय निर्द्धूय भूमौ पातितानि, भूमेरपि च प्रायो निर्द्धूय निर्द्धूयान्यत्रापसारितानीति। ३ नवेन–प्रत्यग्रेण हरितेन–नीलेन भासमानेन स्निग्धत्वेन वा दीप्यमानेन पत्रभारेण–दलसञ्चयेन यो जातोऽन्धकारस्तेन गम्भीराः–अलब्धमध्य-भागाः सन्तो दर्शनीयाः नवहरितभासमानपत्रभारान्धकारगम्भीरदर्शनीयाः तथा ४ उपविनिर्गतैः निरन्तरविनिर्गतैरिति भावः, नवतरु-णपत्रपल्लवैः तथा कोमलैः–मनोज्ञैः उज्ज्वलैः–शुद्धैः चलद्भिः–ईषत्कम्पमानैः किशलयैः-अवस्थाविशेषोपेतैः पल्लवविशेषैः तथा सुकुमारैः प्रवालैः–पल्लवाङ्कुरैः शोभितानि वराङ्कुराणि–वराङ्कुरोपेतानि अग्रशिखराणि येषां ते उपविनिर्गतनवतरुणपत्रपल्लवकोमलोज्ज्वलचलत्कि-शलयसुकुमालप्रवालशोभितवराङ्कुराग्रशिखराः। इह अङ्कुर–प्रवालयोः कालकृतावस्थाविशेषाद् विशेषो भावनीयः। तथा ५ नित्यम् सर्व-कालम्–षट्स्वपि ऋतुषु इत्यर्थः। ६ कुसुमिताः कुसुमानि–पुष्पाणि संजातान्येषामिति कुसुमिताः, तारकादिदर्शनात् 'इत'प्रत्ययः।

[1]निच्चं मउलिया निच्चं [2]लवइया [3]निच्चं थवइया [4]निच्चं गुलइया [5]निच्चं गोच्छिया [6]निच्चं जमलिया [7]निच्चं जुयलिया [8]निच्चं विणमिया [9]निच्चं पणमिया [10]निच्चं सुविभत्तपडिमंजरिवडिंसयधरा [11]निच्चं कुसुमिय-मउलिय-लवइय-थवइय-गोच्छिय-जमलिय-जुयलिय-विणमिय-पणमिय-सुविभत्तपडिमंजरिवडिंसयधरा [12]सुक-बरहिण-मयणसलागा-कोइल-कोरग-कोभव-भिंगारक-कोंडलग-जीवंजीवक-नन्दीमुख-कविल-पिङ्ग-लक्खग-कारंडव-चक्कवाक-कलहंस-सारसअणेगसउणगणमिहुणवियरियसद्दोन्नइयमहुरसरणाइया



---

१नित्यं-सर्वकालं मुकुलितानि, मुकुलानि नाम कुड्मलानि कलिका इत्यर्थः। २ पल्लविताः। ३ नित्यं स्तबकिताः स्तवकभारवन्त इत्यर्थः। ४ नित्यं गुलिमताः स्तबकगुल्मौ गुच्छविशेषौ। ५ नित्यं गोच्छवन्तः ६ नित्यं यमलम्-नाम-समानजातीययोर्युग्मम् तत् संजातमेषामिति यमलिताः। ७ नित्यं युगलिता युगलम्-सजातीयविजातीययोर्द्वन्द्वम् तदेषां संजातमिति युगलिताः। तथा ८ नित्यं-सर्वकालं फलभरेण विनताः-ईषन्नताः, तथा ९ नित्यं महता फलभरेण प्रकर्षेणातिदूरं नताः प्रणताः। तथा १० नित्यं सर्वकालं सुविभक्तः-सुविच्छित्तिकः प्रतिविशिष्टो मञ्जरीरूपो योऽवतंसकस्तद्धरास्तद्धारिणः। एवं सर्वोऽपि कुसुमितत्वादिको धर्म एकैकस्य वृक्षस्योक्तः। साम्प्रतं केषाञ्चिद् वृक्षाणां सकलकुसुमितत्वादिधर्मप्रतिपादनार्थमाह-११ 'निच्चं कुसुमियमउलिय'इत्यादि। किमुक्तं भवति-केचित् कुसुमिताद्येकैकगुणयुक्ताः केचिद् समस्तकुसुमितादिगुणयुक्ता इति, अत एव 'कुसुमिय-मउलिय'-इत्यादिपदेषु कर्मधारयः। तथा १२ शुक-बर्हिण-मदनशालिका-कोकिला-कोरक-कोभव-भिङ्गारक-कोण्डलक-जीवंजीवक-नन्दीमुख-कपिल-पिङ्गलाक्ष-कारण्डव-चक्रवाक कलहंस-सारसाख्यानामनेकेषां शकुनगणानां मिथुनैः-स्त्रीपुंसयुक्तैर्यद् विचरितम्-इतस्ततो गमनम् यच्च शब्दो-

[1]सुरम्मा [2]संपिंडियदरियभमर—महुयरिपहकरपरिलिंतमत्तछप्पयकुसुमासवलोलमहुरगुमगुमंतगुंजंतदेसभागा [3]अब्भिंतरपुप्फफला [4]बाहिरपत्तोच्छण्णा [5]पत्तेहि य पुप्फेहि य उच्छन्नपलिच्छिन्ना [6]नीरोगका [7]अकंटका

न्नतिकम् उन्नतशब्दकम् मधुरस्वरं च नादितम्–लपितं येषु ते तथा–अत एव १ सुरम्याः सुष्ठु रमणीयाः–अत्र शुकाः कीराः, बर्हिणो
॥१६॥ मयूराः, मदनशालिकाः शारिकाः, कोकिलाः–पिकाः, चक्रवाक–कलहंस–सारसाः प्रतीताः, शेषास्तु जीवविशेषा लोकतो वेदितव्याः।
तथा २ सम्पिण्डिताः–एकत्र पिण्डीभूताः दृप्ताः—मदोन्मत्तया दर्पाध्माता भ्रमरमधुकरीणां [पहकराः सङ्घाताः–"पहकर–ओरोह–
संघाया" [ ] इति *देशीनाममालावचनात्–यत्र ते सम्पिण्डितदृप्तभ्रमरमधुकरीपहकराः, तथा परिलीयमानाः–अन्यतः आगत्याश्रयन्तः
मत्ताः षट्पदाः कुसुमासवलोलाः–किञ्जल्कपानलम्पटाः मधुरं गुमगुमायमानाः गुञ्जन्तश्च–शब्दविशेषं च विदधाना देशभागेषु येषां ते
परिलीयमानमत्तषट्पदकुसुमासवलोलमधुरगुमगुमायमानगुञ्जद्देशभागाः। गमकत्वादेवमपि समासः ततो भूयः पूर्वपदेन विशेषणस-
मासः। तथा ३ अभ्यन्तराणि अभ्यन्तरभागवर्तीनि पुष्पाणि च फलानि च पुष्पफलानि येषां ते तथा। ४ बहिस्तः पत्रैश्छन्नाः–व्याप्ताः
बहिःपत्रच्छन्नाः। तथा ५ पत्रैश्च पुष्पैश्च अवच्छन्नपरिच्छन्नाः–अत्यन्तमाच्छादिताः। तथा ६ नीरोगकाः–रोगवर्जिताः। ७ अक-

* आचार्यहेमचन्द्रविरचितायां देशीनाममालायां नैतद् वचनं दृश्यते। अत एतद् वचनं संभवेत् ततोऽपि प्राचीनतरायां कस्यांचिद् देशीनाममालायाम्। धनपाल–हेमचन्द्रनिर्मितयोः पाइअलच्छी–देशीनाममालयोः 'ओरोह' शब्दो न दृश्यते समूहवाची अतः अस्मिन् वचने 'पहकर–पयर–ओह–संघाया' इति पाठः साधुतरः स्यात्। "पहयरो गणो पयरो। ओहो निवहो संघो संघाओ"—पाइअल० अं० १८। "पग्गेज्ज–पहयरा णियरे"–दे० ना० वर्ग ६ गा० १५।

[1]साउफला [2]निद्धफला [3]णाणाविहगुच्छगुम्ममंडवगसोहिया [4]विचित्तसुहकेउबहुला [5]वावि-पुक्खरिणी-दीहियासु य सुनिवेसियरम्मजालघरगा [6]पिंडिमनीहारिमसुगंधिसुहसुरभिमणहरं च महया गंधद्धणिं मुंचंता [7]सुहसेउ-केउबहुला अणेगरह-सगड-जाण-जुग्ग-गिल्लि-थिल्लि-सिविय-संदमाणियापडिमोयणा

ण्टककाः-कण्टकरहिताः, न तेषां प्रत्यासन्ना बब्बूलादिवृक्षाः सन्तीति भावः। तथा १ स्वादूनि फलानि येषां ते स्वादुफलाः। २ तथा स्निग्धानि फलानि येषां ते स्निग्धफलाः। तथा प्रत्यासन्नैः ३ नानाविधैः-नानाप्रकारैर्गुच्छैः वृन्ताकीप्रभृतिभिः गुल्मैः नवमालिकादिभिर्मण्डपकैः शोभिताः-नानाविधगुच्छगुल्ममण्डपकशोभिताः। तथा ४ विचित्रैः-नानाप्रकारैः शुभैः-मण्डनभूतैः केतुभिः-ध्वजैर्बहुलाः व्याप्ताः विचित्रशुभकेतुबहुलाः। तथा ५ वाप्यश्चतुरस्राकाराः, ता एव वृत्ताः पुष्करिण्यः, यदिवा पुष्कराणि वर्त्तन्ते यासु ताः पुष्करिण्यः, दीर्घिकाः-ऋजुसारिण्यः, वापीषु पुष्करिणीषु दीर्घिकासु च सुष्ठु निवेशितानि रम्याणि जालगृहकाणि येषु ते वापी-पुष्करिणी-दीर्घिकासु सुनिवेशितरम्यजालगृहकाः। ६ तथा पिण्डिमा-पिण्डिता सती निर्हारिमा-दूरं विनिर्गच्छन्ती पिण्डिमनिर्हारिमा तां सुगन्धिम् सुगन्धिकाम् शुभसुरभिभ्यो गन्धान्तरेभ्यः सकाशात् मनोहरा शुभसुरभिमनोहरा तां च—'महया' इति प्राकृतत्वात् द्वितीयार्थे तृतीया-महतीम्—इत्यर्थः-गन्धघ्राणिं यावद्भिर्गन्धपुद्गलैर्गन्धविषये गन्धघ्राणिरुपजायते तावती गन्धपुद्गलसंहतिः-उपचारात्-गन्धघ्राणिरित्युच्यते, तां निरन्तरं मुञ्चन्तः। तथा ७ शुभाः-प्रधाना इति-सेतवः-मार्गाः आलवालपाल्यो वा केतवः-ध्वजाः बहुलाः-बहवो येषां ते तथा। ८ 'अणेगरह-सगड-जाण-जुग्ग-*गिल्लि-थिल्लि-सिविय-संदमाणियपडिमोयणा' इति, रथा द्विविधाः-



* 'गिल्लि'—"हस्तिनः उपरि कोल्लररूपा या मानुषं गिलतीव"-औ० वृ०। लोकभाषायां 'अंबाडी' इति प्रसिद्धा। ÷ थिल्लि—"लाटानां यानि

[1]पासाईया दरिसणिज्जा अभिरूवा जाव पडिरूवा।

॥१८॥ ते णं तिलगा जाव नन्दिरुक्खा अन्नाहिं बहूहिं पउमलयाहिं [2]नागलयाहिं असोगलयाहिं चंपगलयाहिं चूयलयाहिं [3]वणलयाहिं वासंतियलयाहिं अइमुत्तयलयाहिं कुंदलयाहिं सामलयाहिं सव्वतो समंता संपरिक्खित्ता।

ताओ णं पउमलयाओ जाव सामलयाओ निच्चं कुसुमियाओ निच्चं मउलियाओ निच्चं लवइयाओ निच्चं थवइयाओ निच्चं गुच्छियाओ निच्चं गुम्मियाओ निच्चं जमलियाओ निच्चं जुयलियाओ निच्चं विणमियाओ निच्चं पणमियाओ सुविभत्तपडिमंजरिवडिंसगधरीओ निच्चं कुसुमियमउलियथवइयलवइयगुम्मियजम-

---

क्रीडारथाः संग्रामरथाश्च, शकटानि प्रतीतानि, यानानि–सामान्यतः शेषाणि वाहनानि, युग्यानि–गोल्लविषयप्रसिद्धानि द्विहस्तप्रमाणानि [चतुरस्राणि] वेदिकोपशोभितानि जम्पानानि, शिबिकाः–कूटाकारेणाच्छादिता जम्पानविशेषाः, स्यन्दमानिकाः–पुरुषप्रमाणजम्पानविशेषाः, अनेकेषां रथशकटादीनाम् अधोऽतिविस्तीर्णत्वात् प्रतिमोचनं येषु ते तथा। १ 'पासादीया' इत्यादिपदचतुष्टयं प्राग्वत्।

'ते णं तिलगा' इत्यादि पाठसिद्धम्। नवरम् २ 'नागलयाहिं' ति नागाः–द्रुमविशेषाः ३ 'वणलयाहिं' ति वना अपि द्रुमविशेषाः, द्रुमाणां च लतात्वम् एकशाखाकानां द्रष्टव्यम् ये हि द्रुमा ऊर्ध्वगतैकशाखा न तु दिग्विदिक्प्रसृतबहुशाखाः ते लता इति प्रसिद्धाः।

४ एतच्च समस्तं प्राग्वद् (पृ० १४ पं० १२ अं० ५) व्याख्येयं।

---

अड्डपल्यानानि तानि अन्यविषयेषु 'थिल्लीओ' अभिधीयन्ते"–औ० वृ०। थिल्लि–बे घोडानी बगी [?]–थिल्लि–ठेला गाडी?

लियजुयलियगुच्छियविणमियपणमियसुविभत्तपडिमंजरिवडिंसगधरीओ संपिंडियदरियभमर–महुयरिपहकरपरिलिंतमत्तछप्पयकुसुमासवलोलमहुरगुमगुमेंतगुंजंतदेसभागाओ जाव पासादीयाओ दरिसणिज्जाओ अभिरूवाओ पडिरूवाओ।

[1]तस्स णं [2]असोगवरपायवस्स उवरिं [3]बहवे [4]अट्ठ अट्ठ मङ्गलगा पन्नत्ता। [5]तं जहा–[6]सोत्थिय–[7]सिरिवच्छ–[8]नन्दियावत्त–[9]वद्धमाणग–[10]भद्दासण–[11]कलस–[12]मच्छ–[13]दप्पणा [14]सव्वरयणामया [15]अच्छा [16]सण्हा [17]लण्हा [18]घट्ठा [19]मट्ठा [20]णीरया



१ तस्य 'णं'इति प्राग्वत्। २अशोकवरपादपस्य उपरि ३बहूनि ४ +अष्टावष्टौ मङ्गलकानि प्रज्ञप्तानि। ५ तद् यथा–६स्वस्तिकः। ७ –श्रीवृक्षः। ८ *नन्द्यावर्त्तः, क्वचिद्–'नन्दावत्त'–इति पाठः, तत्र 'नन्दावर्त्तः'इति शब्दसंस्कारः। ९ =वर्द्धमानकम् शरावसंपुटम्। १० भद्रासनम्। ११ कलशः। १२ मत्स्ययुग्मम्। १३ दर्पणः–एतानि चाष्टावपि मङ्गलकानि १४ सर्वरत्नमयानि। १५ अच्छानि–आकाशस्फटिकवदतीव स्वच्छानि। १६ श्लक्ष्णानि–श्लक्ष्णपुद्गलस्कन्धनिष्पन्नानि श्लक्ष्णनिष्पन्नपटवत्। १७ लण्हानि–मसृणानि घुण्टितपटवत्। १८ घृष्टानीव घृष्टानि खरशाणया पाषाणप्रतिमावत्। १९ मृष्टानीव मृष्टानि सुकुमारशाणया पाषाणप्रतिमेव। २० अत एव

+ "'अष्टौ अष्टौ' इति वीप्साकरणात् प्रत्येकं ते अष्टौ इति वृद्धाः। अन्ये तु अष्टौ इति संख्या, अष्टमङ्गलकानि इति च संज्ञा"–औ० वृ०। – "श्रीवत्सः तीर्थंकरहृदयावयवविशेषाकारः"–औ० वृ०। "श्रिया युक्तो वत्सो वक्षः अनेन श्रीवत्सः रोमावर्तविशेषः"–अभिधान० कां० २ श्लो० १३६। * "नन्द्यावर्तः प्रतिदिग्नवकोणः स्वस्तिकविशेषः रूढिगम्यः"–औ० वृ०। = "वर्धमानकम् शरावम्, पुरुषारूढः पुरुषः इत्यन्ये"–औ० वृ०।

॥२०॥

[1]निम्मला [2]निप्पंका [3]निक्कंकडच्छाया [4]सप्पभा [5]समिरीया [6]सउज्जोया [7]पासादीया दरिसणिज्जा अभिरूवा पडिरूवा ।

[8]तस्स णं [9]असोगवरपायवस्स [10]उवरिं [11]बहवे [12]किण्हचामरज्झया [13]नीलचामरज्झया [14]लोहियचामरज्झया [15]हालिद्दचामरज्झया [16]सुक्किल्लचामरज्झया [17]अच्छा [18]सण्हा लण्हा [19]रुप्पपट्टा [20]वइरामयदंडा [21]जलयामलगंधिया [22]सुरम्मा [23]पासादीया दरिसणिज्जा अभिरूवा पडिरूवा ।

---

नीरजांसि–स्वाभाविकरजोरहितत्वात् । १ निर्मलानि–आगन्तुकमलाभावात् । २ निष्पङ्कानि–कलङ्कविकलानि कर्दमरहितानि वा । ३ निष्कङ्कटा–निष्कवचा—निरावरणा निरुपघातेति भावार्थः—छाया–दीप्तिर्येषां तानि निष्कङ्कटच्छायानि । ४ सप्रभाणि स्वरूपतः प्रभावन्ति ५ समरीचीनि बहिर्विनिर्गतकिरणजालानि । अत एव ६ सोद्योतानि–बहिर्व्यवस्थितवस्तुस्तोमप्रकाशकराणि । ७ 'पासाइया' इत्यादिपदचतुष्टयव्याख्या पूर्ववत् ।

८ तस्य 'णं' इति प्राग्वत् । ९ अशोकवरपादपस्य १० उपरि ११ बहवः १२ कृष्णचामरध्वजाः, चामराणि च ध्वजाश्च चामरध्वजाः कृष्णाश्च ते चामरध्वजाश्च कृष्णचामरध्वजाः । एवं १३ नीलचामरध्वजाः, १४ लोहितचामरध्वजाः, १५ हारिद्रचामरध्वजाः, १६शुक्लचामरध्वजाः । एते च कथम्भूताः ? इत्याह–१७ अच्छाः–स्फटिकवदतिनिर्मलाः । १८ श्लक्ष्णाः–श्लक्ष्णपुद्गलस्कन्धनिष्पन्नाः । १९ रूप्यः रूप्यमयः वज्रमयस्य दण्डस्योपरि पट्टो येषां ते रूप्यपट्टाः । 'वइरदण्डा' इति २० वज्रः–वज्ररत्नमयः दण्डो रूप्यपट्टमध्यवर्ती येषां ते वज्रदण्डाः । तथा २१ जलजानामिव–जलजकुसुमानां पद्मादीनामिव अमलो गन्धो येषां ते जलजामलगन्धकाः । अत एव २२ सुरम्याः–अतिशयेन रमणीयाः । २३ 'पासाइया' इत्यादि पूर्ववत् ।

[1]तस्स णं [2]असोगवरपायवस्स उवरिं [3]बहवे छत्ताइच्छत्ता [4]पडागाइपडागा [5]घंटाजुयला [6]चामरजुयला [7]उप्पलहत्थगा [8]पउमहत्थगा [9]कुमुयहत्थगा [10]नलिणहत्थगा [11]सुभगहत्थगा [12]सोगंधियहत्थगा [13]पोंडरियहत्थगा [14]महापोंडरियहत्थगा [15]सयपत्तहत्थगा [16]सहस्सपत्तहत्थगा [17]सव्वरयणामया [18]अच्छा जाव पडिरूवा]

[४] [[19]तस्स णं [20]असोगवरपायवस्स [21]हेट्ठा [22]एत्थ णं [23]एगे

---

१ 'तस्स णं'इति प्राग्वत्। २अशोकवरपादपस्योपरि ३बहूनि छत्रातिच्छत्राणि छत्रात्–लोकप्रसिद्धाद् एकसंख्याकाद् अतिशायीनि छत्राणि उपर्यधोभागेन द्विसंख्यानि त्रिसंख्यानि वा छत्राणि छत्रातिच्छत्राणि। तथा ४ बह्व्यः पताकाभ्यो लोकप्रसिद्धाभ्योऽतिशायिन्यः पताकाः पताकातिपताकाः। ५बहूनि तेष्वेव छत्रातिच्छत्रादिषु घण्टायुगलानि। ६ चामरयुगलानि। तथा ७तत्र तत्र प्रदेशे उत्पलहस्तकाः–उत्पलाख्या जलजकुसुमसंघातविशेषाः। एवं ८ पद्महस्तकाः ९ कुमुदहस्तकाः १० नलिनहस्तकाः ११ सुभगहस्तकाः १२ सौगन्धिकहस्तकाः १३ पुण्डरीकहस्तकाः १४ महापुण्डरीकहस्तकाः १५ शतपत्रहस्तकाः १६ सहस्रपत्रहस्तकाः।

७ उत्पलं–गर्दभकम्। ८ पद्मं–सूर्यविकाशि पङ्कजम् ९ कुमुदं–कैरवम्। १० नलिनम्–ईषद्रक्तं पद्मम्। ११ सुभगं–पद्मविशेषः १२ सौगन्धिकं–कल्हारम् १३ पुण्डरीकं–श्वेताम्बुजम् १४ तदेवातिविशालं महापुण्डरीकम् १५–१६शतपत्र–सहस्रपत्रे पत्रसंख्याविशेपावच्छिन्नौ पद्मविशेषौ। एते च छत्रातिच्छत्रादयः सर्वेऽपि १७ सर्वरत्नमयाः–सर्वात्मना रत्नमयाः १८ 'अच्छा सण्हा' इत्यादि विशेपणजातं पूर्ववत् (पृ० १९ पं० ८ अं० १५)।

[४]१९तस्य 'णं'इति प्राग्वत्। २०अशोकवरपादपस्य। २१अधस्तात्। अशोकवरपादपस्य यदधः २२अत्र 'णं'इति पूर्ववत्। २३एको

[1]महं]पुढविसिलापट्टए। वत्तव्वया उववातियगमेणं नेया। [[2]पन्नत्ते [3]ईसिंखंधासमल्लीणे [4]विक्खंभायाम-सुप्पमाणे [5]किण्हे [6]अंजणग-घण-कुवलय-हलधरकोसेज्जसरिसे [7]आगास-केस-कज्जल-कक्केयण-इंदनील-अयसिकुसुमप्पगासे [8]भिंग-अंजणभंगभेय-रिट्ठग-नीलगुलिय-गवलाइरेगे [9]भमरनिकुरुंबभूए [10]जंबूफल-असणकुसुमबंधण-नीलुप्पलपत्तनिकर-मरगय-आसासग-नयणकीय-असिवन्ने [11]निद्धे [12]घणे [13]अज्झुसिरे [14]रूवगपडिरूवगदरिसणिज्जे

१महान् १ पृथ्वीशिलापट्टकः २ प्रज्ञप्तः। कथम्भूतः? इत्याह-३ इह स्कन्धः स्थुडमित्युच्यते, तस्याशोकवरपादपस्य यत् स्थुडं तत् ईषद्-मनाक् सम्यग् लीनस्तदासन्न इत्यर्थ इति। ४ विष्कम्भेणायामेन च शोभनम्-औचित्यानतिवर्ति प्रमाणं यस्य स विष्कम्भायामसुप्रमाणः। ५ कृष्णः। कृष्णत्वमेव निरूपयति ६ अञ्जनको-वनस्पतिविशेषः घनो-मेघः कुवलयं-नीलोत्पलम् हलधरकौशेयं-बलदेववस्त्रं तैः सदृशः-समानवर्णः। ७ आकाशं धूलीमेघादिविरहितम् केशाः-शिरसिजाः, कज्जलं-प्रतीतम् कर्केतनेन्द्रनीलौ-मणिविशेषौ, अतसीकुसुमं प्रसिद्धम् एतेषामिव प्रकाशो-दीप्तिर्यस्य स तथा। ८ भृङ्गः-चतुरिन्द्रियः पक्षिविशेषः अञ्जनं-सौवीराञ्जनम् तस्य भङ्गेन-विच्छित्त्या भेदः-छेदोऽञ्जनभङ्गभेदः रिष्टको-रत्नविशेषः नीलगुटिकाः-प्रतीताः गवलं-माहिषं शृङ्गम् तेभ्योऽपि कृष्णत्वेनातिरेको यस्य स तथा। ९ अत्र भूतशब्दः औपम्यवाची-यथा अयं लाटदेशः सुरलोकभूतः-सुरलोकोपमः इत्यर्थः-ततोऽयमर्थः-भ्रमरनिकुरुम्बोपमः। १० जम्बूफलानि प्रतीतानि असनकुसुमबन्धनं-असनपुष्पवृन्तम् नीलोत्पलपत्रनिकरः मरकतमणिः प्रतीतः आसासको-बीयकाभिधानो वृक्षः, नयनकीकः-नेत्रमध्यताराः, असिः-खड्गम् तेषामिव वर्णो यस्य स तथा। ११ स्निग्धो न तु रूक्षः। १२ घनो-निबिडो न तु कोष्ठक इव मध्यशुषिरः। १३ 'अज्झुसिरे' इति श्लक्ष्णशुषिररहितः। १४ रूपकाणां यानि-तत्र

[1]आयंसगतलोवमे [2]सुरम्मे [3]सीहासणसंठिए [4]सुरूवे [5]मुत्ताजालखइयंतकम्मे [6]आइणग-रूत-बूर-नवणीय-तूलफासे [7]सव्वरयणामए अच्छे जाव पडिरूवे।

[५] [[8]तत्थ णं [9]आमलकप्पाए नयरीए] [10]सेओ* राया [होत्था [11]महयाहिमवंत-महंतमलय-मंदर-महिंदसारे [12]अच्चंतविसुद्धरायकुलवंसप्पसूए [13]निरंतरं रायलक्खणविराइयंगमंगे



संक्रान्तानि प्रतिरूपकाणि प्रतिबिम्बानि तैः दर्शनीयो रूपकमतिरूपकदर्शनीयः। १ आदर्शतलोपमः-आदर्शो-दर्पणस्तस्य तलं तेन समतयोपमा यस्य स आदर्शतलोपमः। २ सुष्ठु मनांसि रमयतीति सुरम्यः "कृद् बहुलम्" [ ] इति वचनात् कर्त्तरि 'य'प्रत्ययः। ३ सिंहासनस्येव संस्थितं-संस्थानं यस्य स सिंहासनसंस्थितः। अत एव ४ सुरूपः-शोभनम् रूपम्-आकारो यस्य स सुरूपः। इतश्च सुरूपो यत आह-५ मुक्ताजालानि-मुक्ताफलसमूहाः खचितानि अन्तकर्मसु-प्रान्तप्रदेशेषु यस्य स मुक्ताजालखचितान्तकर्मा। ६ आजिनकं-चर्ममयं वस्त्रम् रूतं-प्रतीतम् बूरो-वनस्पतिविशेषः नवनीतं-म्रक्षणम् तूलं-अर्कतूलम् तेषामिव कोमलतया स्पर्शो यस्य स आजिनकरूतबूरनवनीततूलस्पर्शः। ७ 'सव्वरयणामए' इत्यादिविशेषणकदम्बकं प्राग्वत् (पृ० १९ पं० ८ अं० १४)।

[५] ८तस्यां ९आमलकल्पायां नगर्यां १०श्वेतो नाम राजा। ११महाहिमवान् हैमवतस्य क्षेत्रस्योत्तरतः सीमाकारी वर्षधरपर्वतः, मलयः-पर्वतविशेषः सुप्रतीतः, मन्दरो-मेरुः महेन्द्रः-शक्रादिको देवराजः तद्वत् सारः-प्रधानः-महाहिमवत्-महामलय-मन्दर-महेन्द्रसारः। तथा १२ अत्यन्तविशुद्धे राजकुलवंशे प्रसूतः अत्यन्तविशुद्धराजकुलवंशप्रसूतः। तथा १३निरन्तरम्-अपलक्षणव्यवधानाभावेन राजलक्षणैः-

* सेणिए राया भा०। सेणिओ राया पा० १-३ (३ लि० स० वि० व० १६१९)

[1]बहुजणबहुमाणपूइए [2]सव्वगुणसमिद्धे [3]खत्तिए [4]मुइए [5]मुद्धाभिसित्ते [6]माउपिउसुजाए [7]दयपत्ते [8]सीमंकरे [9]सीमंधरे [10]खेमंकरे [11]खेमंधरे [12]मणुस्सिंदे [13]जणवयपिया [14]जणवयपाले

राज्यसूचकैर्लक्षणैर्विराजितानि अङ्गमङ्गानि–अङ्गप्रत्यङ्गानि यस्य स निरन्तरराजलक्षणविराजिताङ्गमङ्गः। तथा १बहुभिर्जनैः बहुमानेन–अन्तरङ्गप्रीत्या पूजितो बहुजनबहुमानपूजितः। कस्मात्? इत्याह–२सर्वैः शौर्योपशमादिभिर्गुणैः समृद्धः–स्फीतः सर्वगुणसमृद्धः। ततो बहुजनबहुमानपूजितः गुणवत्सु प्रायः सर्वेषामपि बहुमानसम्भवात्। तथा ३क्षत्रस्यापत्यं क्षत्रियः "क्षत्रादियः"[६–१–९३ हैमश०] इति 'इय' प्रत्ययः, अनेन नवमाष्टमादिनन्दवत् राजकुलप्रसूतोऽपि न हीनजातीयः, किन्तु उत्तमजातीयः इत्यावेदितम्। तथा ४ *मुदितः सर्वकालं हर्षवान्, प्रत्यनीकोपद्रवासम्भवात्, तदसम्भवश्च प्रत्यनीकानामेवाभावात्। तथा चाह–५ प्रायः सर्वैरपि प्रत्यन्तराजैः प्रतापमसहमानैः 'नान्यथाऽस्माकं गतिः' इति परिभाव्य मूर्धभिः–मस्तकैरभिषिक्तः–पूजितो मूर्द्धाभिषिक्तः। तथा ६ मातृपितृभ्यां सुजातो मातृपितृसुजातः, अनेन समस्तगर्भाधानप्रभृतिसम्भविदोषविकलः इत्यावेदितः। तथा ७ +दयाप्राप्तः स्वभावतः शुद्धजीवद्रव्यत्वात्। तथा ८ सेवागतानामपूर्वापूर्वनृपाणां सीमां–मर्यादां करोति यथा 'एवं वर्तितव्यमेवं न' इति सीमङ्करः। तथा ९ पूर्वपुरुषपरम्परायातां स्वदेशप्रवर्त्तमानां सीमां–मर्यादां धारयति–पालयति न तु विलुम्पतीति सीमन्धरः। तथा १० क्षेमं–वशवर्त्तिनां उपद्रवाभावं करोति क्षेमङ्करः चौरादिसंहारात्। तथा ११ तद् धारयति आरक्षकनियोजनात् क्षेमन्धरः। अत एव १२ मनुष्येन्द्रः। तथा १३ जनपदस्य पितेव जनपदपिता। कथं पितेव? इत्यत आह–१४जनपदपालः–जनपदं पालयतीति जनपदपालः, ततो भवति जनपदस्य पितेव।

* " 'मुइए'त्ति निर्दोषमातृकः। यदाह–मुइओ जो होइ जोणिसुद्धो "–औ० वृ०। + " 'दयपत्ते'त्ति प्राप्तकरुणागुणः "–औ० वृ०।

जणवयपुरोहिए [२]सेउकरे [३]केउकरे [४]नरपवरे [५]पुरिसवरे [६]पुरिससीहे [७]पुरिसवग्घे [८]पुरिसआसीविसे [९]पुरिसवरपोंडरीए [१०]पुरिसवरगंधहत्थी [११]अड्ढे [१२]दित्ते [१३]वित्ते [१४]वित्थिन्नविपुलभवण-सयण-आसण-जाण-वाहणाइण्णे [१५]बहुधण-बहुजायरूव-रजए [१६]आओग-पओगसंपउत्ते [१७]विच्छड्डियपउरभत्तपाणे

---

तथा १ जनपदस्य शान्तिकारितया पुरोहित इव जनपदपुरोहितः। तथा २ सेतुः-मार्गस्तं करोतीति सेतुकरः-मार्गदेशक इति भावः ३ केतुः-चिह्नं तत् करोतीति केतुकरः-अद्भुतसंविधानककारीति भावः। तथा ४ नरेषु-मनुष्येषु मध्ये प्रवरो-नरप्रवरः। स च सामान्यमनुष्यापेक्षयापि स्यात् अत आह-५ पुरुषेषु-पुरुषाभिमानिषु मध्ये वरः-प्रधानः उत्तमपौरुषोपेतत्वादिति पुरुषवरः। यतः ६ पुरुषः सिंह इवाप्रतिमल्लतया पुरुषसिंहः। ७ तथा पुरुषो व्याघ्र इव शूरतया पुरुषव्याघ्रः। ८ पुरुषः आशीविष इव दोषविनाशनशीलतया पुरुषाशीविषः। ९ पुरुषः वरपुण्डरीकमिवोत्तमतया भुवनसरोवरभूषकत्वात् पुरुषवरपुण्डरीकः। १० पुरुषः वरगन्धहस्तीव परान् असहमानान् प्रतीति पुरुषवरगन्धहस्ती, ततो भवति पुरुषवरः। तथा ११ आढ्यः-समृद्धः। १२ दीप्तः शरीरत्वचा देदीप्यमानत्वात् दृप्तो वा दृप्तारिमानमर्दनशीलत्वात्। अत एव १३ वित्तो-जगत्प्रतीतः। यदुक्तम् आढ्यः इति तदेव सविस्तरमुपदर्शयति-१४ विस्तीर्णानि-विस्तारवन्ति विपुलानि-प्रभूतानि भवनानि-गृहाणि शयनानि आसनानि च प्रतीतानि यानानि-रथादीनि वाहनानि-अश्वादीनि एतैराकीर्णो-व्याप्तो युक्तः- विस्तीर्णविपुलभवनशयनासनयानवाहनाकीर्णः। १५ तथा बहु धनम् बहु जातरूपं-सुवर्णम् रजतं च-रूप्यं यस्य स बहुधनबहुजातरूप-रजतः। तथा १६ आयोगप्रयोगसम्प्रयुक्तः-आवाहनविसर्जनकुशलः। तथा १७ विच्छ-

बहुदासी-दास-गो-महिस-गो-एलगप्पभुए [2]पडिपुन्नजंत-कोस-कोट्ठागार-आउहघरे [3]बलवं [4]दुब्बलपच्चामित्ते [5]ओहयकंटयं [6]मलियकंटयं [7]उद्धियकंटयं [8]अप्पडिकंटयं [9]ओहयसत्तुं [10]निहयसत्तुं [11]मलियसत्तुं

दितं-तथाविधः*विशिष्टोपकाराकारितया विसृष्टम् [8]उकुरुटकादिषु प्रचुरं भक्तपानं यस्मिन् राज्यमनुशासति स विच्छर्दितप्रचुरभक्तपानः-अनेन पुण्याधिकतया न तस्मिन् राज्यमनुशासति दुर्भिक्षमभूदिति कथितम् । तथा १ बहूनां दासीनां दासानां गवां-बलीवर्दानां महिषाणां गवां-स्त्रीगवानां एडकानां च प्रभुः बहुदासीदासगोमहिषगवेलकप्रभुः-ततः स्वार्थिक 'क'प्रत्ययविधानात् प्रभुकः । तथा २ प्रतिपूर्णानि-भृतानि यन्त्रकोशकोष्ठागाराणि-यन्त्रगृहाणि, कोशगृहाणि-भाण्डागाराणि, कोष्ठगृहाणि-धान्यानां कोष्ठागाराणि गृहाणि इति भावः, आयुधगृहाणि च यस्य स प्रतिपूर्णयन्त्रकोशकोष्ठागारायुधगृहः । तथा ३ बलं शारीरिकम् मानसिकं च यस्यास्ति स बलवान् ४ दुर्बलप्रत्ययमित्रः-दुर्बलानामकारणवत्सल इति भावः । एवंभूतः सन् राज्यं प्रशासत् विहरति-अवतिष्ठते इति योगः । कथम्भूतं राज्यम्? इत्याह-५ अपहतकण्टकम्-इह देशोपद्रवकारिणश्चरटाः कण्टका इव कण्टकाः ते अपहता अवकाशानासादनेन स्थगिता यस्मिन् तत् अपहतकण्टकम् तथा ६ मलिताः-उपद्रवं कुर्वाणा मानम्लानिमापादिताः कण्टका यत्र तद् मलितकण्टकम् । तथा ७ उद्धृताः स्वदेशत्याजनेन जीवितत्याजनेन वा कण्टका यत्र तत् उद्धृतकण्टकम् । तथा ८ न विद्यते प्रतिमल्लः कण्टको यत्र तद् अप्रतिमल्लकण्टकम् तथा ९ प्रत्यनीकाः राजानः शत्रवः ते अपहताः स्वावकाशमलभमानीकृता यत्र तत् अपहतशत्रु । तथा १० निहताः-रणाङ्गणे पातिताः शत्रवो यत्र तद् निहतशत्रु तथा ११ मलिताः-तद्गतसैन्यत्रासापादनतो मानम्लानिमापादिताः शत्रवो यत्र तत्

*-विशिष्टोपकारकारितया पा० ५ (लि० स० वि० व० १४८५) भा० । 8 भाषायाम् 'उकरडो' इति प्रसिद्धं मलनिक्षेपणस्थानम् । अस्य

[1]उद्धियसत्तुं [2]निज्जियसत्तुं [3]पराइयसत्तुं [4]ववगयदुब्भिक्खदोसमारि [5]भयविप्पमुक्कं [6]खेमं [7]सिवं [8]सुभिक्खं [9]पसंतडिंबडमरं रज्जं पसासेमाणे विहरइ।

'धारिणी देवी' वर्णनम्

[६] [तस्स णं सेयरण्णो] धारिणी [नामं] [3]देवी [होत्था [4]सुकुमालपाणिपादा [5]अहीणपडिपुण्णपंचिंदियसरीरा



मलितशत्रु। तथा १ स्वातन्त्र्यच्यावनेन स्वदेशच्यावनेन जीवितच्यावनेन वा उद्धृताः शत्रवो यत्र तत् उद्धृतशत्रु। एतदेव विशेषणद्वयेन व्याचष्टे–२ निर्जितशत्रु। ३ पराजितशत्रु। तथा ४ व्यपगतं दुर्भिक्षं दोषो मारिश्च यत्र तत् व्यपगतदुर्भिक्षदोषमारि तथा ५ भयेन स्वदेशोत्थेन परचक्रकृतेन वा विप्रमुक्तम्। अत एव ६ क्षेमं–निरुपद्रवम्। ७ शिवम्–शान्तम्। ८ सुभिक्षम् शोभना–शुभा भिक्षा दर्शनिनां दीनानाथादीनां च यत्र तत् सुभिक्षम्। तथा ९ प्रशान्तानि डिम्बानि–विघ्नाः डमराणि–राजकुमारादिकृतविड्वराः* यत्र तत् प्रशान्तडिम्बडमरम्।

[६] १ तस्य समस्तान्तःपुरप्रधाना भार्या सकलगुणधारिणी २ धारिणीनामा ३ देवी। 'जाव समोसरणं समत्तं' इति यावच्छब्दकरणाद् राजवर्णको देवीवर्णकः समवसरणं च औपपातिकानुसारेण तावद् वक्तव्यं ४ ×यावत् समवसरणं समाप्तम्। देवीवर्णके ४ सुकुमारौ पाणी पादौ च यस्याः सा सुकुमारपाणिपादा। तथा ५ अहीनानि–अन्यूनानि स्वरूपतः प्रतिपूर्णानि लक्षणतः पञ्चापीन्द्रियाणि

मूलप्रकृतिः सं० 'उत्कर' शब्दः समूहवाची। * विड्वरो वैराज्यम्–राज्यविरुद्धता। ×'यावत्' शब्देन यत् यत् सूचित तत् समग्रं विवरणकारकथनानुसारेण औपपातिकसूत्रपाठमनुसृत्य अत्र तत्तत्स्थाने मूले यथोचितं निक्षिप्तम्।

[१]लक्खण-वंजण-गुणोववेया [२]माण-उम्माण-पमाणपडिपुण्णसुजायसव्वंगसुंदरंगी [३]ससिसोमागारकंतपियदंसणा [४]सुरूवा [५]करयलपरिमियपसत्थतिवलिवलियमज्झा [६]कुंडलुल्लिहियगंडलेहा [७]कोमुइरयणियरविमलपडिपुण्णसो-

---

यस्मिन् तथाविधं शरीरं यस्याः सा अहीनप्रतिपूर्णपञ्चेन्द्रियशरीरा तथा १ लक्षणानि-स्वस्तिक-चक्रादीनि व्यञ्जनानि-मषी-तिलकादीनि गुणाः-सौभाग्यादयस्तैरुपपेता लक्षणव्यञ्जनगुणोपपेता । 'उप अप इत' इति शब्दत्रयस्थाने "पृषोदरादयः" [३-२-१५५ हैमश०] इति अपाऽकारस्य लोपे उपपेता इति द्रष्टव्यम् । तत्र २ मानं-जलद्रोणप्रमाणता, कथमिति चेत्, उच्यते, जलस्यातिभृते कुण्डे पुरुषे ५
स्त्रियां वा निवेशितायां यज्जलं निस्सरति तद्यदि द्रोणप्रमाणं भवति तदा स पुरुषः स्त्री वा मानप्राप्त उच्यते, तथा उन्मानं-अर्द्धभारप्रमाणता, सा चैवम्-तुलायामारोपितः पुरुषः स्त्री वा यद्यर्द्धभारं तुलति तदा स उन्मानप्राप्तोऽभिधीयते, प्रमाणं-स्वाङ्गुलेनाष्टोत्तरशतोच्छ्रितता, ततो मानोन्मानप्रमाणैः प्रतिपूर्णानि-अन्यूनानि सुजातानि-जन्मदोषरहितानि सर्वाणि अङ्गानि-शिरःप्रभृतीनि यानि तैः सुन्दराङ्गी मानोन्मानप्रमाणप्रतिपूर्णसुजातसर्वाङ्गसुन्दराङ्गी । तथा ३ शशिवत् सोमाकारम्-अरौद्राकारम् कान्तं-कमनीयम् प्रियं द्रष्टॄणामानन्दो-
त्पादकम् दर्शनं-रूपं यस्याः सा शशिसोमाकारकान्तप्रियदर्शना । अत एव ४ सुरूपा, तथा ५ करतलपरिमितो-मुष्टिग्राह्यः प्रशस्त- १०
लक्षणोपेतः त्रिवलीको-वलित्रयोपेतो रेखात्रयोपेतो वलिको-बलवान् मध्यो-मध्यभागो यस्याः सा करतलपरिमितप्रशस्तत्रिवलीकवलिकमध्या । ६ तथा कुण्डलाभ्यां उल्लिखिता-घृष्टा गण्डलेखा-कपोलविरचितमृगमदादिरेखा यस्याः सा कुण्डलोल्लिखितगण्डलेखा । ७ कौमुदी-कार्तिकी पौर्णमासी तस्यां रजनिकरः-चन्द्रमाः तद्वद् विमलं-निर्मलम् प्रतिपूर्णम् अन्यूनातिरिक्तमानम्

मवयणा [1]सिंगारागारचारुवेसा [2]संगयगय-हसिय-भणिय-चिट्ठिय-विलास-ललिय-संलावनिउणजुत्तोवयारकुसला [3]सुंदर-थण-जघण-वयण-कर-चरण-नयणलायण्णविलासकलिया *सेएण रण्णा सद्धिं अणुरत्ता अविरत्ता इट्ठे सद्द-फरिसे रस-रूव-गंधे पंचविहे माणुस्सए कामभोगे पच्चणुभवमाणा विहरइ]।

सौम्यम्-अरौद्राकारं वदनं यस्याः सा तथा। १ शृङ्गारस्य-रसविशेषस्य अगारमिव अगारम् अथवा शृङ्गारो-मण्डनभूषणाटोपस्तत्प्रधान आकारः-आकृतिर्यस्याः सा तथा, चारुः वेषो-नेपथ्यं यस्याः सा तथा-ततः कर्मधारयः-शृङ्गाराऽगा(ऽऽका)रचारुवेषा। तथा २ सङ्गता ये गत-हसित-भणित-चेष्टित- विलासाः यश्च निपुणो युक्तश्च स्वजन-परजनान् प्रति उपचारः तेषु कुशला संगतगतहसितभणितचेष्टितविलास--ललितसंलापनिपुणयुक्तोपचारकुशला, तत्र सङ्गतं नासङ्गतम् गतं यद् गुप्ततया गृहस्यैवान्तर्गमनं न तु बहिः स्वेच्छाचारितया, सङ्गतं हसितं यत् कपोलविकाशमात्रसूचितं न त्वट्टट्टहासादि। "हसियं कपोलकहियं" [ ] इति वचनात्। सङ्गतं भणितं यत् समागते प्रयोजने नर्मभणितिपरिहारेण विवक्षितार्थमात्रप्रतिपादनम्, सङ्गतं चेष्टितं यद् कुचजघनाद्यवयवाच्छादनपरतयोपवेशनशयनोत्थानादि, सङ्गतो विलासः-स्वकुलौचित्येन शृङ्गारादिकरणम्। तथा ३ सुन्दरैः स्तन-जघन-वदन-कर-चरण-नयनलावण्यविलासैः कलिता, अत्र विलासः-स्थानासनगमनादिरूपश्चेष्टाविशेषः। उक्तं च-"स्थानासनगमनानां हस्त-

* श्वेतेन राज्ञा सार्धम् अनुरक्ता अविरक्ता इष्टान् शब्द-स्पर्शान् रस-रूप-गन्धान् पञ्चविधान् +मानुषकान् -कामभोगान् प्रत्यनुभवन्ती विहरति। ∸ ललितसंलापः प्रतीतः अत एव विवरणकारेण न व्याख्यातः। * विवरणकारकथनानुसारेण 'श्वेतेन' इति।

+मनुष्यभोग्यान्। - श्रोत्र-नेत्रगम्यौ कामौ-शब्दः रूपं च। घ्राण-रसन-स्पर्शनगम्या भोगाः-गन्धः, स्वाद स्पर्शश्च।

महावीरः समागतः

[७] ⊖सामी समोसढे [ते णं काले णं ते णं समए णं समणे भगवं महावीरे आइगरे तित्थगरे सहसंबुद्धे पुरिसुत्तमे पुरिससीहे पुरिसवरपुंडरीए पुरिसवरगंधहत्थी अभयदए चक्खुदए मग्गदए सरणदए जीवदए दीवो ताणं सरणं गई पइट्ठा धम्मवरचाउरंतचक्कवट्टी अप्पडिहयवरनाणदंसणधरे वियट्टछउमे जिणे जावए तिण्णे तारए मुत्ते मोयए बुद्धे बोहए सव्वण्णू सव्वदरिसी सिवं अयलं अरुयं अणंतं अक्खयं अव्वाबाहं अपुणरावत्तिअं सिद्धिगइणामधेज्जं ठाणं संपाविउकामे अरहा जिणे केवली।

भ्रूनेत्रकर्मणां चैव। उत्पद्यते विशेषो यः श्लिष्टोऽसौ विलासः स्यात्" ॥ [ ]। अन्ये त्वाहुः—"विलासो नेत्रजो विकारः" [ ] तथा चोक्तम्—"हावो मुखविकारः स्यात् भावश्चित्तसमुद्भवः। विलासो नेत्रजो ज्ञेयो विभ्रमो भ्रूसमुद्भवः" ॥ [ ]

[७] समस्तोऽपि औपपातिकग्रन्थप्रसिद्धो भगवद्वर्णको वाच्यः, स चातिगरीयानिति न लिख्यते, केवलमौपपातिकग्रन्थादवसेयः* ।

⊖स्वामी समवसृतः—तस्मिन् काले तस्मिन् समये श्रमणः भगवान् महावीरः आदिकरः तीर्थकरः सहसंबुद्धः पुरुषोत्तमः पुरुषसिंहः पुरुषवरपुण्डरीकः पुरुषवरगन्धहस्ती अभयदयः चक्षुर्दयः मार्गदयः शरणदयः जीवदयः द्वीपः त्राणम् शरणम् गतिः प्रतिष्ठा धर्मवरचातुरन्तचक्रवर्ती अप्रतिहतवरज्ञानदर्शनधरः व्यावृत्तच्छद्मा जिनः जापकः तीर्णः तारकः मुक्तः मोचकः बुद्धः बोधकः सर्वज्ञः सर्वदर्शी शिवम् अचलम् अरुजम् अनन्तम् अक्षतम्

* विवरणकारसूचनानुसारेण समस्तोऽपि भगवद्वर्णकः औपपातिकग्रन्थाद् अत्र मूले उद्धृतः।

[८] 8सत्तहत्थुस्सेहे समचउरंससंठाणसंठिए वज्जरिसहनारायसंघयणे अणुलोमवाउवेगे कंकग्गहणी कवोयपरिणामे सउणिपोसपिट्ठंतरोरुपरिणए पउमुप्पलगंधसरिसनिस्सासंसुरभिवयणे छवी निरायंकउत्तमपसत्थअइसेयनिरुवमपले जल्लमल्लकलंकसेयरयदोसवज्जियसरीरनिरुवलेवे छायाउज्जोइयंगमंगे घणनिचियसुबद्धलक्खणुण्णयकूडागारनिभपिंडियग्गसिरए सामलिबोंडघणनिचियप्फोडियमिउविसयपसत्थसुहुमलक्खणसुगंधसुंदरभुयमोयगभिंगनेलकज्जलपहट्ठभमरगणनिद्धनिकुरंबनिचियकुंचियपयाहिणावत्तमुद्धसिरए दालिमपुप्फप्पगासतवणिज्जसरिसनिम्मलसुणिद्धकेसंतकेसभूमी छत्तागारुत्तिमंगदेसे णिव्वणसमलट्ठमट्ठचंदद्धसमणिडाले उडुवइपडिपुण्णसोमवयणे अल्लीणपमाणजुत्तसवणे सुस्सवणे पीणमंसलकवोलदेसभाए आणामियचावरुइलकिण्हब्भ-

अव्याबाधम् अपुनरावृत्तिकम् सिद्धिगतिनामधेयं स्थानं सम्प्राप्तुकामः अर्हन् जिनः केवली ।

8सप्तहस्तोत्सेधः समचतुरस्रसंस्थानसंस्थितः वज्रऋषभनाराचसंहननः अनुलोमवायुवेगः =कङ्कग्रहणिः ×कपोतपरिणामः ≥ शकुनिपोस–पृष्ठान्तरोरुपरिणतः पद्मोत्पलगन्धसदृशनिःश्वाससुरभिवदनः छविमान् निरातङ्कउत्तमप्रशस्तअतिश्वेतनिरुपमपलः ∸ जल्ल–मल्लकलङ्कस्वेदरजोदोषवर्जितशरीरनिरुपलेपः छायोद्योतिताङ्गाङ्गः घननिचितसुबद्धलक्षणोन्नतकूटाकारनिभपिण्डिताग्रशिरस्कः शाल्मलिबोण्ड○घननिचितस्फोटितमृदुविशदप्रशस्तसूक्ष्मलक्षणसुगन्धसुन्दरभुजमोचक–भृङ्ग–नैल–कज्जल–प्रहृष्टभ्रमरगणस्निग्धनिकुरम्बनिचितकुञ्चितप्रदक्षिणावर्त्तमूर्धशिरोजः दाडिमपुष्पप्रकाशतपनीयसदृशनिर्मलसुस्निग्धकेशान्तकेशभूमिः छत्राकारोत्तमाङ्गदेशः निर्व्रणसमलष्टमृष्टचन्द्रार्धसमललाटः उडुपतिप्रतिपूर्णसोमवदनः आलीनप्रमाणयुक्तश्रवणः सुश्रवणः पीनमांसलकपोलदेशभागः

= कङ्कपक्षिवद् ग्रहणी गुदाशयो यस्य । × कपोतस्य जठराग्निः पाषाणलवानपि जरयति इति श्रुतिः । ≥ 'पोस' अपानदेशः—यस्य अपानदेशः शकुनेरिव निर्लेपः । ∸ याति च लगति च जल्लः, स्वल्पप्रयत्नापनेयो मल्लो–मलः । ○ बोंड च फलम् ।

॥३२॥ राइतणुकसिणणिद्धभमुहे अवदालियपुंडरीयणयणे कोयासियधवलपत्तलच्छे गरुलाययउज्जुतुंगणासे उवचियसिलप्पवालबिंबफलसण्णिभाहरोट्ठे 'पंडुरससिसयलविमलणिम्मलसंखगोक्खीरफेणकुंददगरयमुणालियाधवलदंतसेढी अखंडदंते अप्फुडियदंते अविरलदंते सुणिद्धदंते सुजायदंते एगदंतसेढी विव अणेगदंते हुयवहणिद्धंतधोयतत्ततवणिज्जरत्ततलतालुजीहे अवट्ठियसुविभत्तचित्तमंसू मंसलसंठियपसत्थसद्दूलविउलहणुए चउरंगुलसुप्पमाणकंबुवरसरिसग्गीवे वरमहिसवराहसीहसद्दूलउसभनागवरपडिपुण्णविउलक्खंधे जुगसण्णिभपीणरइयपीवरपउट्ठसुसंठियसुसिलिट्ठविसिट्ठघणथिरसुबद्धसंधिपुरवरफलिहवट्टियभुए भुयगीसरविउलभोगआयाणपलिहउच्छूढदीहबाहू रत्ततलोवइयमउयमंसलजायलक्खणपसत्थअच्छिद्दजालपाणी पीवरकोमलवरंगुली आयंबतंबतलिणसुइरुइलणिद्धनखे चंदपाणिलेहे संखपाणिलेहे चक्कपाणिलेहे दिसासोत्थियपाणिलेहे चंद–सूर–संख–

आनामितचापरुचिरकृष्णाभ्रराजितनुकृष्णस्निग्धभ्रूः अवदारितपुण्डरीकनयन. विकसितधवलपत्रलाक्षः गरुडायतऋजुतुङ्गनासः उपचितशिलाप्रवालबिम्बफलसन्निभाधरोष्ठः पाण्डुरशशिसकलविमलनिर्मलशङ्खगोक्षीरफेनकुन्ददकरजोमृणालिकाधवलदन्तश्रेणि' अखण्डदन्त' अस्फुटितदन्तः अविरलदन्तः सुस्निग्धदन्तः सुजातदन्तः एकदन्तश्रेणिः इव अनेकदन्तः हुतवहनिर्ध्मातधौततप्ततपनीयरक्ततलताल्जिह्वः अवस्थितसुविभक्तचित्रश्मश्रुः मांसलसंस्थितप्रशस्तशार्दूलविपुलहनुकः चतुरङ्गुलसुप्रमाणकम्बुवरसदृशग्रीवः वरमहिषवराहसिंहशार्दूलवृषभनागवरप्रतिपूर्णविपुलस्कन्धः युगसन्निभपीनरतिदपीवरप्रकोष्ठसुसंस्थितसुश्लिष्टविशिष्टघनस्थिरसुबद्धसंधिपुरवरपरिघवर्तितभुजः भुजगेश्वरविपुलभोगआदानपरिघउत्क्षिप्तदीर्घबाहुः रक्ततलोपचितमृदुकमांसलजातलक्षणप्रशस्तअच्छिद्रजालपाणिः पीवरकोमलवराङ्गुलिः आताम्रताम्र×तलिनशुचिरुचिरस्निग्धनखः चन्द्रपाणिलेखः शङ्खपाणिलेखः चक्रपाणिलेखः दिशास्वस्तिकपाणिलेखः चन्द्र–सूर्य–शङ्ख–चक्र–

× तलिन सूक्ष्मम् ।

चक्क-दिसासोत्थियपाणिलेहे कणगसिलायलुज्जलपसत्थसमतलउवचियवित्थिण्णपिहुलवच्छे सिरिवच्छंकियवच्छे अकरंडुयकणगरुययनिम्मलसुजायनिरुवहयदेहधारी संनयपासे संगतपासे सुंदरपासे सुजायपासे मियमाइयपीणरइयपासे उज्जुयसमसहियजच्चतणुकसिणणिद्धआइज्जलडहरमणिज्जरोमराई झसविहगसुजायपीणकुच्छी झसोयरे सुइकरणे पउमवियडणाभे गंगावत्तगपयाहिणावत्ततरंगभंगुररविकिरणतरुणबोहियअकोसायंतपउमगंभीरवियडणाभे साहयसोणंदमुसलदप्पणणिगरियवरकणगच्छरुसरिसवरवइरवलियमज्झे पमुइयवरतुरगसीहवरवट्टियकडी वरतुरगसुजायगुज्झदेसे आइण्णहउ व्व णिरुवलेवे वरवारणतुल्लविक्कमविलसियगई गयससणसुजायसन्निभोरू समुग्गनिमग्गगूढजाणू एणीकुरुविंदावत्तवट्टाणुपुव्वजंघे संठियसुसिलिट्ठगूढगुप्फे सुप्पइट्ठिय-

दिशास्वस्तिकपाणिलेखः कनकशिलातलोज्ज्वलप्रशस्तसमतलउपचितविस्तीर्णपृथुलवक्षाः श्रीवत्साङ्कितवक्षाः +अकरण्डुककनक*रुचकनिर्मलसुजातनिरुपहतदेहधारी संनतपार्श्वः संगतपार्श्वः सुन्दरपार्श्वः सुजातपार्श्वः =मितमात्रिकपीनरचितपार्श्वः ऋजुकसमसहितजात्यतनुकृष्णस्निग्धआदेयलडह×रमणीयरोमराजिः झषविहगसुजातपीनकुक्षिः झषोदरः शुचिकरणः पद्मविकटनाभः गङ्गावर्तकप्रदक्षिणावर्ततरङ्गभङ्गुररविकिरणतरुणबोधितविकासमानपद्मगम्भीरविकटनाभः सहतसोणंद○मुसलदर्पण-निगरियवरकनकत्सरुसदृशवरवज्रवलितमध्यः प्रमुदितवरतुरगसिंहवरवर्तितकटिः वरतुरगसुजातगुह्यदेशः आजन्यहय इव निरुपलेपः वरवारणतुल्यविक्रमविलसितगतिः गजश्वसनसुजातसंनिभोरुः समुद्गनिमग्नगूढजानुः एणीकुरुविन्दावर्तवृत्तानुपूर्वजङ्घः सस्थितसुश्लिष्टगूढगुल्फः सुप्रति-

+ अकरण्डुकम्-मांसलतया अनुपलक्ष्यमाणपृष्ठवशास्थिकम्। * रुचकः रुचिः। = मितमात्रिकौ उचितपरिमाणयुक्तौ। × लडह लावण्ययुक्तम्।
○ सोणंद त्रिकाष्ठिका इत्याकारो घटाधारः। ∸ निगरियं सारीकृतम्।

कुम्मचारुचलणे अणुपुव्वसुसंहयंगुलीए उण्णयतणुतंबणिद्धणक्खे रत्तुप्पलपत्तमउयसुकुमालकोमलतले नगनगरमगरसागरचक्कंकवरंगमंगलंकियचलणे विसिट्ठरूवे हुयवहनिद्धूमजलियतडितडियतरुणरविकिरणसरिसतेए अट्ठसहस्सवरपुरिसलक्खणधरे× ।

[९]*अणासवे अममे अकिंचणे छिन्नसोए निरुवलेवे ववगयपेमरागदोसमोहे निग्गंथस्स पवयणस्स देसए सत्थनायगे पइट्ठावए समणगणवई समणगविंदपरिअट्टए चउत्तीसबुद्धवयणाइसेससंपत्ते[१] पणतीससच्चवयणातिसेससंपत्ते आगासगएणं चक्केणं आगासगएणं छत्तेणं आगासियाहिं चामराहिं आगासफालिहमएणं सपायपीढेणं

[९] १ चतुस्त्रिंशद् बुद्धानाम्-भगवतामर्हतां वचनप्रमुखाः "सर्वस्वभाषानुगतं वचनं धर्मावबोधकरम्"[ ] इत्यादिना उक्तस्वरूपा ये अतिशेषा-अतिशयाः तान् प्राप्तः-चतुस्त्रिंशद्बुद्धवचनातिशेषसम्प्राप्तः । इह वचनातिशेषस्योपादानमत्यन्तोपकारितया प्राधान्य-

छितकूर्मचारुचरणः अनुपूर्वसुसंहताङ्गुलिकः उन्नततनुताम्रस्निग्धनखः रक्तोत्पलपत्रमृदुकसुकुमालकोमलतलः नगनगरमकरसागरचक्राङ्कवराङ्गमङ्गलाङ्कितचरणः विशिष्टरूपः हुतवहनिर्धूमज्वलित8तटितडित्तरुणरविकिरणसदृशतेजाः अष्टसहस्रवरपुरुषलक्षणधरः ।

*अनास्रवः अममः अकिञ्चन छिन्नस्रोता निरुपलेपः व्यपगतप्रेमरागद्वेषमोहः निर्ग्रन्थस्य प्रवचनस्य देशक शास्तृनायकः प्रतिष्ठापकः श्रमणगणपतिः श्रमणकवृन्दपरिवर्तक चतुस्त्रिंशद्बुद्धवचनातिशेषसप्राप्तः पञ्चत्रिंशत्सत्यवचनातिशेषसंप्राप्तः आकाशगतेन चक्रेण आकाशगतेन छत्रेण

× अय च समस्तोऽपि शरीरवर्णक. प्रश्नव्याकरणसूत्रे देवकुरु-उत्तरकुरुनिवासिना शरीरवर्णके प्रायोऽक्षरशः समुपलभ्यते ।

8 पतन्त्या विद्युतः 'तड् तड्' इति जायमानस्य ध्वनेः अनुकरणम् 'तटि' इति ।

ख्यापनार्थम्, अन्यथा देहवैमल्यादयस्ते पठ्यन्ते। तथा च–“*देहं विमलसुगन्धं आमयपस्सेयवज्जियं अरयं। रुहिरं गोक्खीराभं निव्विस्सं पंडुरं मंसं”॥ [ ] इत्यादि । २ पञ्चत्रिंशत् ये सत्यवचनस्यातिशेषा–+अतिशयास्तान् सम्प्राप्तः पञ्चत्रिंशद्वचनातिशेषसम्प्राप्तः। ते चामी सत्य+वचनातिशेषाः– १ संस्कारवत्त्वम् २ उदात्तत्वम् ३ उपचारोपेतत्वम् ४ गम्भीरशब्दत्वम् ५ अनुनादित्वम् ६ दक्षिणत्वम् ७ उपनीतरागत्वम् ८ महार्थत्वम् ९ अव्याहतपौर्वापर्यत्वम् १० शिष्टत्वम् ११ असन्दिग्धत्वम् १२ अपहतान्योत्तरत्वम् १३ हृदयग्राहित्वम् १४ देशकालाव्यतीतत्वम् १५ तत्त्वानुरूपत्वम् १६ अप्रकीर्णप्रसृतत्वम् १७ अन्योऽन्यप्रगृहीतत्वम् १८ अभिजातत्वम् १९ अतिस्निग्धमधुरत्वम् २० अपरमर्मवेधित्वम् २१ अर्थधर्म्माभ्यासानपेतत्वम् २२ उदारत्वम् २३ परनिन्दात्मोत्कर्षविप्रमुक्तत्वम् २४ उपगतश्लाघत्वम् २५ अपनीतत्वम् २६ उत्पादिताविच्छिन्नकौतूहलत्वम् २७ अद्भुतत्वम् २८ अनतिविलम्बित्वम् २९ विभ्रमविक्षेपकिलिकिञ्चितादिवियुक्तत्वम् ३० अनेकजातिसंश्रयाद् विचित्रत्वम् ३१ आहितविशेषत्वम् ३२ साकारत्वम् ३३ सत्त्वपरिगृहीतत्वम् ३४ अपरिखेदितत्वम् ३५ अव्युच्छेदितत्वं चेति ।

तत्र १ संस्कारवत्त्वं संस्कृतादिलक्षणयुक्तत्वम् २ उदात्तत्वं उच्चैर्वृत्तिता ३ उपचारोपेतत्वम्–अग्राम्यता ४ गम्भीरशब्दत्वं मेघस्येव ५ अनुनादिता प्रतिरवोपेतत्वम् ६ दक्षिणत्वं सरलता ७ उपनीतरागत्वं–उत्पादिता श्रोतृजने स्वविपयबहुमानता। एते सप्त शब्दापेक्षा अतिशयाः। अत ऊर्ध्वं तु अर्थाश्रयाः–तत्र ८ महार्थत्वं–परिपुष्टार्थाभिधायिता ९ अव्याहतपौर्वापर्यत्वं–पूर्वापरवाक्याविरोधः १० शिष्टत्वं

---

* देहो विमलसुगन्धः आमय–प्रस्वेदवर्जितः अरजाः । रुधिरं गोक्षीराभम् निर्विस्रं पाण्डुर मांसम् ॥

\+ “सत्यवचनातिशया आगमे न दृष्टाः। एते तु ग्रन्थान्तरदृष्टाः संभाविताः”–समवायाङ्गसूत्रटीकाया श्रीअभयदेवसूरयः पृ० ६३ ।

वक्तुः शिष्टत्वसूचनात् असन्दिग्धत्वं परिस्फुटार्थप्रतिपादनात् [१२] अपहृतान्योत्तरत्वं–परदूषणाविषयता [१३] हृदयग्राहित्वं–दुर्गमस्याप्यर्थस्य परहृदये प्रवेशकरणम् [१४] देशकालाव्यतीतत्वं प्रस्तावोचितता [१५] तत्त्वानुरूपत्वं–विवक्षितवस्तुस्वरूपानुसारिता [१६] अप्रकीर्णप्रसृतत्वं–संबन्धाधिकारपरिमितता [१७] अन्योऽन्यप्रगृहीतत्वं–पदानां वाक्यानां वा परस्परसापेक्षता [१८] अभिजातत्वं–यथाविवक्षितार्थाभिधानशीलता [१९] अतिस्निग्धमधुरत्वं–बुभुक्षितस्य घृतगुडादिवत् परमसुखकारिता [२०] अपरमर्मवेधित्वं–परमर्मानुद्घट्टनशीलता [२१] अर्थधर्माभ्यासानपेतत्वं–अर्थधर्मप्रतिबद्धता [२२] उदारत्वं–अतिविशिष्टगुम्फगुणयुक्तता अतुच्छार्थप्रतिपादकता वा [२३] परनिन्दात्मोत्कर्षविप्रमुक्तत्वं प्रतीतम् [२४] उपगतश्लाघत्वं–उक्तगुणयोगतः प्राप्तश्लाघता [२५] अपनीतत्वं–कारककालवचनलिङ्गादिव्यत्ययरूपवचनदोषापेतता [२६] उत्पादिताविच्छिन्नकुतूहलत्वं–श्रोतॄणां स्वविषये उत्पादितं–जनितमविच्छिन्नं कौतूहलं–कौतुकं येन तत् तथा तद्भावस्तत्त्वम् श्रोतृषु स्वविषयाद्भुतविस्मयकारितेति भावः [२७] अद्भुतत्वम् [२८] अनतिविलम्बित्वम् च प्रतीतम् [२९] विभ्रमविक्षेपकिलिकिञ्चितादिवियुक्तत्वमिति–विभ्रमो–वक्तुर्भ्रान्तमनस्कता विक्षेपो–वक्तुरेवाभिधेयार्थं प्रत्यनासक्तता किलिकिञ्चितं–रोषभयलोभादिभावानां युगपदसकृत्करणं आदिशब्दाद् मनोदोषान्तरपरिग्रहः तैर्विमुक्तं यत् तत् तथा तद्भावस्तत्त्वम् [३०] अनेकजातिसंश्रयाद् विचित्रत्वं–सर्वभाषानुयायितया चित्ररूपता [३१] आहितविशेषत्वं–शेषपुरुषवचनापेक्षया शिष्येषूत्पादितमतिविशेषता [३२] साकारत्वं–विच्छिन्नपदवाक्यता [३३] सत्त्वपरिगृहीतत्वम्–ओजस्विता [३४] अपरिखेदित्वम्–अनायाससंभवात् [३५] अव्युच्छेदितत्वं–विवक्षितार्थसम्यक्सिद्धिं यावद् अविच्छिन्नवचनप्रमेयता इति।

२ आकाशस्फटिकं–यद् आकाशवत् अतिस्वच्छं स्फटिकं तन्मयेन।

सीहासणेणं पुरतो [1]धम्मज्झएणं पगढिज्जमाणेणं|चउद्दसहिं समणसाहस्सीहिं छत्तीसाए अज्जियासाहस्सीहिं सद्धिं संपरिवुडे [2]पुव्वाणुपुव्विं [3]चरमाणे [4]गामाणुगामं [5]दुइज्जमाणे [6]सुहंसुहेणं [7]विहरमाणे [8]जेणेव आमलकप्पा नयरी [9]जेणेव वणसंडे ०जेणेव असोगवरपायवे. जेणेव पुढविसिलापट्टए [11]तेणेव [10]उवागच्छइ [12]उवागच्छित्ता [13]अहापडिरूवं

१ धर्मचक्रवर्तित्वसूचकेन केतुना महेन्द्रध्वजेनेत्यर्थः, तथा २ पूर्वानुपूर्व्या क्रमेणेत्यर्थः ३ चरन्–सञ्चरन्, एतदेवाह ४ ग्रामश्च अनुग्रामश्च–विवक्षितग्रामादनन्तरं ग्रामो ग्रामानुग्रामः तम् ५ द्रवन्–गच्छन्–एकस्मादनन्तरं ग्राममनुल्लङ्घयन् इत्यर्थः–अनेनाप्रतिबद्धविहारिता ख्यापिता। तत्राप्यौत्सुक्याभावमाह–६ सुखंसुखेन–शरीरखेदाभावेन × संयमाबाध्यविहारेण * च= ७; ग्रामादिषु विहरन्–अवतिष्ठमानः ८ +'जेणेव' यस्मिन्नेव देशे आमलकल्पा नगरी ९ यस्मिन्नेव प्रदेशे च वनखण्डः १० यस्मिन्नेव देशे सोऽनन्तरोक्तस्वरूपः शिलापट्टकः। ११ तस्मिन्नेव देशे उपागच्छति, १२ उपागत्य च; १३ यथाप्रतिरूपं यथोचितं मुनिजनस्य

आकाशिकाभिः चामराभिः आकाशस्फाटिकमयेन सपादपीठेन:सिंहासनेन पुरतः धर्मध्वजेन प्रकृष्यमाणेन चतुर्दशभिः श्रमणसहस्रैः षट्त्रिंशद्भिः आर्यिकासहस्रैः सार्धं संपरिवृतः पूर्वानुपूर्वं चरन् ग्रामानुग्रामं द्रवन् सुखंसुखेन विहरन् येनैव *आमलकल्पा नगरी येनैव वनखण्डः येनैव अशो-

० यस्मिन्नेव अशोकवरपादपः। × संयमः अबाध्यः यस्मिन् विहारे–विचरणे–तेन। * संयमाबाध्यविहरेण–पा०४। सयमबाधाविरहेण–भा०२। = वा–पा० ४। + 'जेणेव' इति "प्राकृतत्वात् सप्तम्यर्थे तृतीया"–विवरणकारः। यथा वा संस्कृतभाषायां 'पूर्वेण' इति 'एन' प्रत्ययान्तं सविभक्तिकप्रतिरूपकमव्यय 'पूर्वस्मिन्' अर्थे प्रयुज्यते तथा 'येन–जेण' इति अव्ययं 'यस्मिन्' अर्थे प्राकृते व्यवह्रियमाणं बोध्यम्। तथैव 'तेण' इत्यस्यापि निष्पत्तिर्ज्ञेया। * विवरणकारकथनानुसारेण 'आमलकल्पा' इति।

उग्गहं उगिण्हइ उग्गिण्हित्ता असोगवरपायवस्स अहे पुढविसिलापट्टगंसि पुरत्थाभिमुहे संपलिअंकनिसन्ने संजमेणं तवसा अप्पाणं भावेमाणे विहरति]

[१०] परिसा निग्गया जाव राया पज्जुवासइ [तए णं आमलकप्पानयरीए सिंघाडग-तिय-चउक्क-चच्चर-चउम्मुह-महापहेसु बहुजणो अण्णमण्णं एवं आइक्खइ एवं भासेइ एवं पण्णवेइ एवं परूवेइ-एवं खलु देवाणु-

---

१ अवग्रहम्-आवासम् अनुज्ञापनापूर्वकम् २ अवगृह्णाति ३ अवग्रहश्च अशोकवरपादपस्य ४ अधः ५ पृथिवीशिलापट्टके ६ पूर्वाभिमुखः-तीर्थकृतो हि भगवन्तः सदा समवसरणे पृथिवीशिलापट्टके वा देशनायै -पूर्वाभिमुखा अवतिष्ठन्ते-७ संपर्यङ्कनिषण्णः ८ संयमेन तपसा चात्मानं भावयन् ९ विहरति आस्ते। ततः पर्षन्निर्गमो + वाच्यः।

---

वरपादपः येनैव पृथिवीशिलापट्टकः तेनैव उपागच्छति उपागम्य यथाप्रतिरूपम् अवग्रहम् अवगृह्य अशोकवरपादपस्य अधः पृथिवीशिलापट्टके पौरस्त्याभिमुखः संपल्यङ्कनिषण्णः संयमेन तपसा आत्मानम् भावयमानः विहरति ।

(१०) पर्षद् निर्गता यावत् राजा पर्युपास्ते ततः आमलकल्पानगर्याम् १ शृङ्गाटक-त्रिक-चतुष्क-चत्वर-चतुर्मुख-महापथेषु बहुजनः अन्योन्यम्

---

— "उत्तरदिक् पूर्वदिक् च लोके पूज्या, ततस्तस्याः पृष्ठप्रदाने लोकमध्येऽवर्णवादो भवति" इत्यादि-सनिर्युक्ति-भाष्य-वृत्तिकबृहत्कल्पसूत्र पृ० १३२ गा० ४५६-४५। + अयं च निर्गमः औपपातिकसूत्रमाश्रित्य अत्र मूले संयोजितः। १ शृङ्गाटकम्—शृङ्गाटकाभिधानफलविशेषाकारं स्थानम्-त्रिकोणम्। त्रिकम्-यत्र स्थाने रथ्यात्रयमीलकः। चतुष्कम्-रथ्याचतुष्कमीलकः। चत्वरम्-यत्र बहवो मार्गा मिलन्ति। चतुर्मुखम्-तथाविधदेवकुलादि। महापथो राजमार्गः।

दिपया ! समणे भगवं महावीरे जाव आगासगएणं छत्तेणं जाव [पृ० ३० पं० १ पृ० ३८ पं० २] संजमेणं तवसा अप्पाणं भावेमाणे विहरति, तं महाफलं खलु देवाणुप्पियाणं तहारूवाणं अरहंताणं नाम-गोयस्स वि सवणयाए किमंग पुण अभिगमणवंदणनमंसणपडिपुच्छणपज्जुवासणयाए ? तं सेयं खलु एगस्स वि आरियस्स धम्मियस्स सुवयणस्स सवणयाए किमंग पुण विउलस्स अट्ठस्स गहणयाए ? तं गच्छामो णं देवाणुप्पिया ! समणं भगवं महावीरं वंदामो णमंसामो सक्कारेमो सम्माणेमो कल्लाणं मंगलं देवयं चेइयं पज्जुवासेमो, एयं णं इहभवे परभवे य हियाए सुहाए खमाए निस्सेयसाए आणुगामियत्ताए भविस्सइ, तए णं आमलकप्पाए नयरीए

'तए णं आमलकप्पाए नयरीए बहवे उग्गा भोगा' इत्यादि औपपातिक * ग्रन्थोक्तं सर्वमवसातव्यं यावत् समग्राऽपि राजप्रभृतिका परिषत् पर्युपासीना अवतिष्ठते।

एवम् आख्याति एवं भाषते एवं प्रज्ञापयति एवं प्ररूपयति-एवं खलु देवानुप्रियाः ! श्रमणो भगवान् महावीरः यावत् आकाशगतेन छत्रेण यावत् संयमेन तपसा आत्मानं भावयमानः विहरति, तत् महाफलं खलु देवानुप्रियाणा तथारूपाणाम् अर्हता नामगोत्रस्यापि श्रवणतया किमङ्ग पुनः अभिगमन-वन्दन-नमस्यन-प्रतिप्रच्छन-पर्युपासनतया ? तत् श्रेयः खलु एकस्यापि आर्यस्य धार्मिकस्य सुवचनस्य श्रवणतया किमङ्ग पुनः विपुलस्य अर्थस्य ग्रहणतया ? तद् गच्छामः देवानुप्रियाः ! श्रमणं भगवन्तं महावीरं वन्दामहे नमस्यामः सत्कारयामः सम्मानयामः कल्याणं मङ्गलं देवता चैत्यं पर्युपास्महे, एतत् तद् इहभवे परभवे च हिताय सुखाय २ क्षमाय निःश्रेयसाय आनुगामिकतया भविष्यति, ततः आमलकल्पायाः नगर्याः

* औपपातिकग्रन्थोक्तमेतत् सर्वं तं ग्रन्थमाश्रित्य मूले सन्निवेशितम्। २ क्षमाय संगतत्वाय।

बहवे उग्गा उग्गपुत्ता भोगा भोगपुत्ता राइण्णा राइण्णपुत्ता खत्तिया खत्तियपुत्ता भडा भडपुत्ता जोहा जोहपुत्ता पसत्थारो मल्लई मल्लइपुत्ता लेच्छई लेच्छइपुत्ता अण्णे य बहवे राईसरतलवरमाडंबियकोडुंबिय-इब्भसेट्ठिसेणावइसत्थवाहप्पभितयो अप्पेगइया वंदणवत्तियं अप्पेगइया पूयणवत्तियं एवं सक्कारवत्तियं सम्माणवत्तियं दंसणवत्तियं कोऊहलवत्तियं, अप्पेगइया अट्ठविणिच्छयहेउं-अस्सुयाइं सुणेस्सामो सुयाइं निस्संकियाइं करिस्सामो, अप्पेगइया अट्ठाइं हेऊइं कारणाइं वागरणाइं पुच्छिस्सामो, अप्पेगइया सव्वओ समंता मुंडे भवित्ता

बहवः ३ उग्राः उग्रपुत्राः भोगाः भोगपुत्राः राजन्याः राजन्यपुत्राः क्षत्रियाः क्षत्रियपुत्राः भटाः भटपुत्राः योधाः योधपुत्राः प्रशास्तारः मल्लकिनः मल्लकिपुत्राः लिच्छविनः लिच्छविपुत्राः अन्ये च बहवः ४ राज–ईश्वर–तलवर–माडम्बिक–कौटुम्बिक–इभ्य–श्रेष्ठि–सेनापति–सार्थवाहप्रभृतयः ५ अप्येककाः वन्दनवृत्तिकम् अप्येककाः पूजनवृत्तिकम् एवं सत्कारवृत्तिकम् सम्मानवृत्तिकम् दर्शनवृत्तिकम् कुतूहलवृत्तिकम्, अप्येककाः अर्थविनिश्चयहेतुम्–अश्रुतानि श्रोष्यामः श्रुतानि निःशङ्कितानि करिष्यामः, अप्येककाः अर्थान् हेतून् कारणानि व्याकरणानि प्रक्ष्यामः, अप्येककाः सर्वतः समन्तात् मुण्डा

३ उग्र–भोग–राज न्य–क्षत्रिय–भट–योध–प्रशास्तृ–मल्लकि–लिच्छविशब्दा विशिष्टराजवंशसूचकाः। ४ राजा–माण्डलिकः। ईश्वरः युवराजः। तलवरः परितुष्टनरपतिप्रदत्तपट्टबन्धविभूषितो राजस्थानीयः। माण्डविको मण्डपाधिपः। कौटुम्बिकः- कतिपयकुटुम्बप्रभुः। इभ्यः यद्द्रव्यनिचयाच्छन्नो महेभो न दृश्यते। श्रेष्ठी श्रीदेवतामुद्रायुक्तसुवर्णपट्टविभूषितोत्तमाङ्गः। सेनापतिः नृपतिनियुक्तश्चतुरङ्गसेनापतिः। सार्थवाहः सार्थनायकः। ५ अपि एकका:–केचन।

अगाराओ अणगारियं पव्वइस्सामो, पंचाणुव्वइयं सत्तसिक्खावइयं दुवालसविहं गिहिधम्मं पडिवज्जिस्सामो, अप्पेगइया जिणभत्तिरागेणं अप्पेगइया 'जीयमेयं' ति कट्टु ण्हाया कयबलिकम्मा कयकोउयमंगलपायच्छित्ता सिरसा कंठे मालकडा आविद्धमणिसुवण्णा कप्पियहार-अद्धहार-तिसर-पालंब-पलंबमाणकडिसुत्तयकयसोहाभरणा पवरवत्थपरिहिया चंदणोलित्तगायसरीरा, अप्पेगइया हयगया एवं गयगया रहगया सिबियागया संदमाणियागया अप्पेगइया पायविहारचारेणं पुरिसवग्गुरापरिक्खित्ता महया उक्किट्ठसीहणायबोलकलकलरवेणं पक्खुब्भियमहासमुद्दरवभूयं पिव करेमाणा आमलकप्पाए नयरीए मज्झंमज्झेणं णिग्गच्छन्ति णिग्गच्छित्ता जेणेव अंबसालवणे चेइए तेणेव उवागच्छन्ति उवागच्छित्ता समणस्स

भूत्वा अगाराद् अनगारिकं प्रव्रजिष्यामः, पञ्चानुव्रतिकं सप्तशिक्षाव्रतिकं द्वादशविधं गृहिधर्मं प्रतिपत्स्यामहे, अप्येकका: जिनभक्तिरागेण, अप्येकका: ६ 'जीतम् एतत्' इति कृत्वा स्नाता: कृतबलिकर्माणः कृतकौतुकमङ्गलप्रायश्चित्ता: शिरसा कण्ठे कृतमाला: आविद्धमणिसुवर्णा: कल्पितहार-अर्धहार-त्रिसर-प्रालम्ब-प्रलम्बमानकटिसूत्रककृतशोभाभरणाः परिहितप्रवरवस्त्राः चन्दनावलिप्तगात्रशरीरा:, अप्येकका: हयगता: एवम् गजगता: रथगता: शिबिकागता: स्यन्दमानिकागता:, अप्येकका: पादविहारचारेण पुरुषवागुरापरिक्षिप्ताः महता उत्कृष्टसिंहनाद ७ बोलकलकलरवेण प्रक्षुब्धमहासमुद्ररवभूतमिव कुर्वन्त: आमलकल्पायाः नगर्याः ८ मध्यंमध्येन निर्गच्छन्ति, निर्गम्य येनैव आम्रशालवनं चैत्यम् तेनैव उपागच्छन्ति उपागम्य श्रमणस्य

६ जीतम् आचार:-प्रथा-परम्परा ७ बोल: अस्पष्टशब्दः। कलकल: स्पष्टशब्दः। ८ "मध्यंमध्येन इत्यर्थः। 'गृहंगृहेण' 'मध्यंमध्येन' 'पदपदेन' 'सुखंसुखेन' इत्यादयः शब्दा: चिरतनव्याकरणेषु सुसाधवः प्रतिपादिता इति नायम् अपप्रयोग:"—श्रीमलयगिरिकृतं रायपसेणइयविवरणम्।

भगवओ महावीरस्स अदूरसामन्ते छत्तादीए तित्थयराइसेसे पासन्ति पासित्ता जाण-वाहणाइं ठवेंति ठवित्ता जाण-वाहणेहिंतो पचोरुहन्ति पचोरुहित्ता जेणेव समणे भगवं महावीरे तेणेव उवागच्छन्ति उवागच्छित्ता समणं भगवं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेंति करित्ता वंदंति णमंसंति वंदित्ता णमंसित्ता णच्चासण्णे णाइदूरे सुस्सूसमाणा णमंसमाणा अभिमुहा विणएणं पञ्जलिउडा पज्जुवासंति]

४[तए णं से सेए राया नयणमालासहस्सेहिं पेच्छिज्जमाणे पेच्छिज्जमाणे जाव सा णं धारिणी देवी जेणेव समणे भगवं महावीरे तेणेव उवागच्छंति उवागच्छित्ता जाव समणं भगवं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेंति वन्दंति णमंसंति सेअरायं पुरओ कट्टु जाव विणएणं पञ्जलिकडाओ पज्जुवासंति]

-[तए णं समणे भगवं महावीरे सेअस्स रण्णो धारिणीए देवीए तीसे य महइमहालियाए परिसाए जाव

भगवतो महावीरस्य अदूरसामन्ते छत्रादिकान् तीर्थकरातिशेषान् पश्यन्ति दृष्ट्वा यान-वाहनानि स्थापयन्ति स्थापयित्वा यान-वाहनेभ्यः प्रत्यवरोहन्ति प्रत्यवरुह्य येनैव श्रमणो भगवान् महावीरः तेनैव उपागच्छन्ति उपागम्य श्रमणं भगवन्त महावीरं १त्रिकृत्वः आदक्षिणप्रदक्षिणं कुर्वन्ति कृत्वा वन्दन्ते नमस्यन्ति वन्दित्वा नमस्यित्वा नात्यासन्ने नातिदूरे शुश्रूषमाणाः नमस्यमानाः अभिमुखाः विनयेन प्राञ्जलिपुटाः पर्युपासते । ४ततः स श्वेतो राजा नयनमालासहस्रैः प्रेक्ष्यमाणः प्रेक्ष्यमाणः यावत् सा धारिणी देवी येनैव श्रमणो भगवान् महावीरः तेनैव उपागच्छन्ति उपागम्य यावत् श्रमणं भगवन्तं महावीरं त्रिकृत्वः आदक्षिणप्रदक्षिणं कुर्वन्ति वन्दन्ते नमस्यन्ति श्वेतराजं पुरतः कृत्वा यावत् विनयेन कृतप्राञ्जलयः पर्युपासते ।

-ततः श्रमणो भगवान् महावीरः श्वेतस्य राज्ञः धारिण्या देव्याः तस्याश्च महातिमहत्याः पर्षदः यावत् धर्मं परिकथयति ।

१ त्रिकृत्वः वारत्रयम् ।

पर्षत्प्रतिगमः ।।४३।।

धम्मं परिकहेइ ]

[११] [तए णं सा महइमहालिया मणूसपरिसा समणस्स भगवओ महावीरस्स अंतिए धम्मं सोचा णिसम्म हट्ठतुट्ठ जाव हियया जाव समणं भगवं महावीरं वंदित्ता एवं वयासी–सुअक्खाए ते भन्ते ! निग्गन्थे पावयणे जाव णत्थि णं अण्णे केइ समणे वा माहणे वा जे एरिसं धम्मं आइक्खित्तए किमङ्ग पुण एत्तो उत्तर-तरं ? एवं वदित्ता जामेव दिसं पाउब्भूया तामेव दिसं पडिगया]

×[तए णं से सेए राया सा धारिणी देवी समणस्स भगवओ महावीरस्स अंतिए धम्मं सोचा णिसम्म हट्ठतुट्ठ जाव हियया उट्ठाए उट्ठेंति उट्ठित्ता सुअक्खाए णं भन्ते ! निग्गन्थे पावयणे एवं वदित्ता जामेव दिसिं पाउब्भूयाओ तामेव दिसिं पडिगयाओ]

---

[११] ततः सा महातिमहती मनुष्यपर्षद् श्रमणस्य भगवतो महावीरस्य अन्तिके धर्मं श्रुत्वा निशम्य हृष्टतुष्टा–यावत् १०–हृदया यावत् श्रमणं भगवन्तं महावीरं वन्दित्वा एवम् अवादीत्–सुआख्यातं त्वया भगवन् ! नैर्ग्रन्थ्य प्रवचनम् यावत् नास्ति अन्यः कश्चित् श्रमणो वा ब्राह्मणो वा य ईदृशं धर्मम् आख्यातुम्, किमङ्ग पुनः इतः ११ उत्तरतरम् ? एवम् उदित्वा यामेव दिशं प्रादुर्भूता तामेव दिशं प्रतिगता ।

× ततः स श्वेतो राजा सा धारिणी देवी श्रमणस्य भगवतो महावीरस्य अन्तिके धर्मं श्रुत्वा निशम्य हृष्टतुष्टा यावत् हृदया उत्थया उत्तिष्ठन्ति उत्थाय सुआख्यात भगवन् ! नैर्ग्रन्थ्यं प्रवचनम् एवम् उदित्वा यामेव दिशं प्रादुर्भूताः तामेव दिशं प्रतिगताः।

---

१० 'यावत्' शब्देन 'आनन्दितचित्ता नन्दिता प्रीतिमनाः परमसौमनस्यिता हर्षवशविसर्पद्धृदया' इति पूर्तिर्ज्ञेया । ११ उत्तमतरम्।

सूर्याभदेवेन भगवानवलोकितः

[१२] [1]ते णं काले णं [2]ते णं समए णं [3]सूरियाभे [4]णामं ⊖ देवे [5]सोहम्मे कप्पे [6]सूरियाभे विमाणे [7]सभाए सुहम्माए [8]सूरियाभंसि सिंहासणंसि चउहिं [9]सामाणियसाहस्सीहिं, [10]चउहिं अग्गमहिसीहिं–[11]सपरिवाराहिं,

[१२] १ 'ते' इति प्राकृतशैलीवशात् 'तस्मिन्'इति द्रष्टव्यम्, यस्मिन् काले भगवान् वर्धमानस्वामी साक्षाद् विहरति तस्मिन् काले, २ तस्मिन् समये यस्मिन्नवसरे भगवान् आम्रशालवने चैत्ये देशनां कृत्वोपरतस्तस्मिन्नवसरे इति भावः, ३ सूर्याभः ४ नाम्ना देवः । नामशब्दो ह्यव्ययरूपोऽप्यस्ति ततो विभक्तिलोपः । ५ सौधर्मे सौधर्माख्ये कल्पे यत् ६ सूर्याभम्–सूर्याभनामकं विमानं तस्मिन् या ७ सभा सुधर्माभिधा तस्याम् ८ यत् सूर्याभाभिधानं सिंहासनम् तत्रोपविष्टः सन्निति गम्यते । ९ समाने द्युतिविभवादौ भवाः सामानिकाः–अध्यात्मादित्वाद् – 'इकण्'–विमानाधिपतिसूर्याभदेवसदृशद्युतिविभवादिका देवा इत्यर्थः, ते च मातृ–पितृ–गुरु–उपाध्याय–महत्तरवत् सूर्याभदेवस्य पूजनीयाः केवलं विमानाधिपतित्वहीना इति सूर्याभं देवं स्वामिनं प्रतिपन्नाः, तेषां सहस्राणि सामानिकसहस्राणि तैश्चतुर्भिः, प्राकृतत्वाच्च सूत्रे * सकारस्य दीर्घत्वम् स्त्रीत्वं च । १० चतसृभिरग्रमहिषीभिः–इह ×कृताभिषेका देवी महिषी इत्युच्यते, सा च स्वपरिवारभूतानां सर्वासामपि देवीनामग्रा इत्यग्रा, अग्राश्च ता महिष्यश्च अग्रमहिष्यस्ताभिश्चतसृभिः । कथम्भूताभिः? इत्याह–११ सपरिवाराभिः परिवारः सह यासां ताः सपरिवारास्ताभिः, परिवारश्चैकैकस्या

⊖ लिखितादर्शेषु मुद्रितपुस्तकेऽपि चासन् 'णामं' शब्दः विवरणकारविवरणानुसारेण अस्माभिर्मूले योजितः । – "अध्यात्मादिभ्य इकण्"–[६–३–७८ हैमश०] * 'सहस्स' शब्दस्य आद्यसकारो दीर्घो जातः । × "या कृताभिषेका नृपपत्नी सा महिषी, अन्या अकृताभिषेका नृपस्त्रियो भोगिन्य इत्युच्यन्ते" अमरकोश० द्वि० का० मनुष्यव० श्लो० ५ ।

[1]तिहिं परिसाहिं, [2]सत्तहिं अणिएहिं, [3]सत्तहिं अणियाहिवईहिं, [4]सोलसहिं आयरक्खदेवसाहस्सीहिं,

देव्याः सहस्रं सहस्रं देवीनाम् । तथा १ तिसृभिः पर्षद्भिः, तिस्रो हि विमानाधिपतेः सर्वस्यापि पर्षदः, तद्यथा–अभ्यन्तरा मध्या बाह्या च, तत्र या वयस्यमण्डलीस्थानीया परममित्रसंहतिसदृशी सा अभ्यन्तरपर्षत् , तया सह अपर्यालोचितं स्वल्पमपि प्रयोजनं न विदधाति । अभ्यन्तरपर्षदा सह पर्यालोचितं यस्यै निवेद्यते यथा–'इदमस्माकं पर्यालोचितं सम्मतमागतम् युष्माकमपीदं सम्मतं किं वा न'? इति–सा मध्यमा । यस्याः पुनरभ्यन्तरपर्षदा सह पर्यालोचितं मध्यमया च सह दृढीकृतं करणायैव निरूप्यते यथा–'इदं क्रियताम्'इति–सा बाह्या । तथा २ अनीकानि–सैन्यानि, तानि च सप्त–तद्यथा–हयानीकम् गजानीकम् रथानीकम् पत्त्यनीकम् वृषभानीकम् गन्धर्वानीकम् नाट्यानीकम्, तत्राद्यानि पञ्चानीकानि संग्रामाय कल्पन्ते, गन्धर्व–नाट्यानीके पुनरुपभोगाय–तैः सप्तभिरनीकैः ३ अनीकानि स्वस्वाधिपतिव्यतिरेकेण न सम्यक् प्रयोजने समापतिते सत्युपकल्पन्ते ततः सप्तानीकाधिपतयोऽपि तस्य वेदितव्याः, तथा चाह–'सत्तहिं अणियाहिवईहिं' । तथा ४ षोडशभिः आत्मरक्षदेवसहस्रैः इति–विमानाधिपतेः सूर्याभस्य देवस्यात्मानं रक्षयन्तीत्यात्मरक्षाः–"कर्मणोऽण्"[५–१–७२ हैमश०] इति 'अण्'–प्रत्ययः–ते च शिरस्त्राणकल्पाः–यथा हि शिरस्त्राणं शिरस्याविद्धं प्राणरक्षकं भवति तथा तेऽप्यात्मरक्षका गृहीतधनुर्दण्डादिप्रहरणाः समन्ततः पृष्ठतः पार्श्वतोऽग्रतश्चावस्थायिनो विमानाधिपतेः सूर्याभस्य देवस्य प्राणरक्षकाः। देवानामपायाभावात् तेषां तथाग्रहणपुरस्सरमवस्थानं निरर्थकमिति चेत्, न, स्थितिमात्रपरिपालनहेतुत्वात् प्रीतिप्रकर्षहेतुत्वाच्च, तथाहि–ते समन्ततः सर्वासु दिक्षु गृहीतप्रहरणा ऊर्ध्वस्थिता अवतिष्ठमानाः स्वनायकशरीररक्षणपरायणाः स्वनायकैकनिषण्णदृष्टयः परेषामसहमानानां क्षोभमापादयन्तो जनयन्ति स्वनायकस्य परां प्रीतिमिति । एते च नियतसंख्याकाः सूर्याभस्य

अन्नेहिं बहूहिं सूरियाभविमाणवासीहिं वेमाणिएहिं देवेहि य देवीहि य सद्धिं संपरिवुडे महया[3] अहय[4]नट्ट[5]-गीयवाइय[6]तंतीतलतालतुडियघणमुइंगपडुप्पवादियरवेणं [8]दिव्वाइं [9]भोगभोगाइं भुञ्जमाणे विहरति, [10]इमं च णं [11]केवलकप्पं

देवस्य परिवारभूता देवा उक्ताः। १ ये तु तस्मिन् सूर्याभे विमाने पौरजनपदस्थानीयाः, ये त्वाभियोग्याः–दासकल्पाः–तेऽतिभूयांसः आस्थानमण्डल्यामपि चानियतसंख्याका इति तेषां सामान्यत उपादानमाह–'अन्नेहिं बहूहिं सूरियाभविमाणवासीहिं देवेहि देवीहि य सद्धिं संपरिवुडे'–एतैः सामानिकप्रभृतिभिः सार्धम् २ संपरिवृतः–सम्यग्नायकैकचित्ताराधनपरतया–परिवृतः। ३ 'महता रवेण' इति योगः ४ 'अहय' इति "आख्यानकप्रतिबद्धानि" इति वृद्धाः। अथवा अहतानि–अव्याहतानि–अक्षतानि इति भावः–५ नाट्यगीतवादितानि च ६ तन्त्री–वीणा तलाः–हस्ततालाः तालाः कंसिकाः *तुटितानि–शेषतूर्याणि, तथा ७ घनः–घनसदृशो ध्वनिसाधर्म्यात् यो मृदङ्गः–मर्दलः पटुना–दक्षपुरुषेण प्रवादितः–तत एतेषां पदानां द्वन्द्वः–तेषां यो रवस्तेन ८ दिव्यान्–दिवि भवान् अतिप्रधानानित्यर्थः, ९ 'भोगभोगाइं' इति भोगार्हा ये भोगाः–शब्दादयस्तान्–सूत्रे ×नपुंसकता प्राकृतत्वात्, प्राकृते हि लिङ्गव्यभिचारः। यदाह पाणिनिः स्वप्राकृतलक्षणे–"लिङ्गं –व्यभिचार्यपि"[ ] इति–भुञ्जानो विहरति आस्ते। न केवलमास्ते किंतु १० इमं–प्रत्यक्षतया उपलभ्यमानं ११ केवलकल्पम्–ईषदपरि8समाप्तं =केवलं–केवलकल्पम्–परिपूर्णतया केवलसदृशमिति भावः

* स० तूर्य–प्रा० तुरिय–तुडिय–तुटिय–तुटित–इति शब्दपरिवर्तनम्। × 'भोग'शब्दस्य। – लिङ्गमतन्त्रम् [८–४–४४५] इति आचार्य–हेमचन्द्रः 8 –समाप्त परिसमाप्त केवल केवलज्ञानकेवल–भा० १। = केवलं केवलज्ञानं केवल–पा० ५। भा० २।

[१]जम्बुद्दीवं दीवं [२]विउलेणं ओहिणा [३]आभोएमाणे आभोएमाणे पासति।

[१३] [४]तत्थ [५]समणं [६]भगवं [७]महावीरं [८]जंबूद्दीवे भारहे वासे आमलकप्पाए नयरीए बहिया अंबसालवणे चेइए अहापडिरूवं उग्गहं उगिगण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणं पासति, पासित्ता हट्ठतुट्ठचित्तमाणंदिए

१ जम्ब्वा रत्नमय्या उत्तरकुरुवासिन्या उपलक्षितो द्वीपो जम्बूद्वीपस्तं जम्बूद्वीपम्–जम्बूद्वीपाभिधानं द्वीपम् २ विपुलेन विस्तीर्णेन अवधिना, तस्य हि सूर्याभस्य देवस्यावधिः–अधः प्रथमां पृथिवीं यावत् –तिर्यक संख्येयान्(?) द्वीपसमुद्रानिति भवति विस्तीर्णस्तेन ३ आभोगयन् आभोगयन्–परिभावयन् पश्यति, अनेन 'सत्यप्यवधौ यदि तं ज्ञेयविषयमाभोगं न करोति तदा न किञ्चिदपि तेन जानाति पश्यति च' इत्यावेदितम् ।

[१३]४ 'तत्र' तस्मिन् विपुलेनावधिना जम्बूद्वीपविषये दर्शने प्रवर्तमाने सति ५श्रमणम्–श्राम्यति–तपस्यति नानाविधमिति श्रमणः ६ भगः–समग्रैश्वर्यादिलक्षणः उक्तं च–"ऐश्वर्यस्य समग्रस्य रूपस्य यशसः श्रियः। धर्मस्याथ प्रयत्नस्य षण्णां भग इतीङ्गना" [ ] भगोऽस्यास्तीति भगवान् तम्–भगवन्तम् ७ "शूर वीर विक्रान्तौ" वीरयति–कषायान् प्रति विक्रामति स्मेति वीरः, महांश्चासौ वीरश्च महावीरस्तम् ८जम्बूद्वीपे भारते वर्षे आमलकल्पाया नगर्या बहिर्–आम्रशालवने चैत्ये अशोकवरपादपस्याधः पृथिवीशिलापट्टके सम्पर्यङ्कनिषण्णं गणसमृद्धिसंपरिवृतं यथाप्रतिरूपमवग्रहं गृहीत्वा संयमेन तपसा आत्मानं भावयन्तं पश्यति दृष्ट्वा च–९ हृष्टतुष्टोऽतीवतुष्ट

– तिर्यक् असख्येयान्–मुद्रिते एव पुस्तके पाठः। "सौधर्म–एशानयोर्देवा अवधिविषयेण अधो रत्नप्रभां पश्यन्ति, तिर्यग् असंख्येयानि योजनसहस्राणि, ऊर्ध्वम् आ स्वभवनात्"–तत्त्वार्थभाष्ये अ० ४ सू० २१।

[1]पीइमणे [2]परमसोमणस्सिए [3]हरिसवसविसप्पमाणहियए [4]विकसियवरकमलणयणे [5]पयलियवरकडगतुडियकेऊर-मउडकुंडल-[6]हारविरायंतरइयवच्छे [7]पालंबपलंबमाणघोलंतभूसणधरे

इति भावः, अथवा हृष्टो नाम विस्मयमापन्नो यथा–'अहो भगवानास्ते' इति, तुष्टः–तोषं कृतवान् यथा–भव्यमभूद् यन्मया भगवानवलोकितः तोषवशादेव चित्तमानन्दितं–स्फीतीभूतं–"टु नदु समृद्धौ" इति वचनात्–यस्य स चित्तानन्दितः, सुखादिदर्शनात्*पाक्षिको निष्ठान्तस्य परनिपातः, मकारः प्राकृतत्वादलाक्षणिकस्ततः पदत्रयस्य पदद्वयमीलनेन कर्मधारयः १ प्रीतिर्मनसि यस्यासौ प्रीतिमनाः–भगवति बहुमानपरायण इति भावः ततः क्रमेण बहुमानोत्कर्षवशात् २ शोभनं मनो यस्य स सुमनास्तस्य भावः सौमनस्यम् परमं च तत् सौमनस्यं च परमसौमनस्यम् तत् सञ्जातमस्येति परमसौमनस्यितः एतदेव व्यक्तीकुर्वन्नाह–३ हर्षवशेन विसर्पत्–विस्तारयायि हृदयं यस्य स हर्षवशविसर्पद्धृदयः ४ हर्षवशादेव विकसिते वरकमलवत् नयने यस्य सः ५ तथा हर्षवशादेव शरीरोद्धर्षेण प्रचलितानि वराणि कटकानि–कलाचिकाभरणानि ऽत्रुटितानि–बाहुरक्षकाः केयूराणि–बाह्वाभरणविशेषरूपाणि मुकुटो–मौलिभूषणम् कुण्डले–कर्णाभरणे यस्य स प्रचलितवरकटकत्रुटितकेयूरमुकुटकुण्डलः, तथा ६ हारेण विराजमानेन रचितं–शोभितं ⊖वक्षो यस्य स हारविराजमानरचितवक्षाः ततः पूर्वपदेन कर्मधारयसमासः तथा ७ प्रलम्बते इति ○प्रलम्बः='पदकणुं'–प्रलम्ब-

* "जाति-काल-सुखादिभ्य. परवचनम्" इति काशिकावृत्तौ–२–२–३६। ऽ "तुटिकाश्च बाहुरक्षकाः"–औ० वृ०। ⊖ वक्षो यस्य स इह विवक्षित–पा० ५–४। भा० १। ○ "प्रालम्बो झुम्बनकम्"–औ० वृ०। 'झूमणुं' इति भाषा। "सुवर्णनिर्मिता–आनाभिलम्बितकण्ठिका प्रालम्बिका" इति अमरकोशः द्वि० का० मनुष्यव० श्लो० १०४। = 'पदकणु' इत्यय शब्दो देशभाषायाः प्रतीयते।

[1]ससंभमं [2]तुरियं [3]चवलं [4]सुरवरे ×सीहासणाओ अब्भुट्ठेइ अब्भुट्ठित्ता पायपीढाओ पच्चोरुहति पच्चोरुहित्ता पाउयाओ ओमुयइ ओमुयइत्ता एगसाडियं उत्तरासंगं करेति करित्ता तित्थयराभिमुहे सत्तट्ठपयाइं अणुगच्छइ अणुगच्छित्ता वामं जाणुं [4]अंचेइ दाहिणं जाणुं धरणितलंसि निहट्टु तिक्खुत्तो मुद्धाणं धरणितलंसि [x]निमेइ निमित्ता ईसिं पच्चुन्नमइ पच्चुन्नमित्ता कडय-तुडियथंभियभुयाओ साहरइ साहरित्ता करयलपरिग्गहियं दसणहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी—

मानम्-आभरणविशेषम्-घोलन्ति+ च भूषणानि धरन्तीति प्रलम्बप्रलम्बमानघोलद्भूषणधरः। सूत्रे च 'प्रलम्बमान'पदस्य विशेष्यात् परतो निपातः प्राकृतत्वात् । हर्षवशादेव १ ससंभ्रमम् संभ्रमः इह विवक्षितक्रियाया बहुमानपूर्विका प्रवृत्तिः, सह सम्भ्रमो यस्य वन्दनस्य= गमनस्य वा तत् ससम्भ्रमम् क्रियाविशेषणमेतत्, २ त्वरितं-शीघ्रम् ३ चपलं-सम्भ्रमवशादेव व्याकुलं यथा भवत्येवं ४ सुरवरो-देववरः ।

× सिंहासनाद् अभ्युत्तिष्ठति अभ्युत्थाय पादपीठात् प्रत्यवरोहति प्रत्यवरुह्य पादुकाः अवमुञ्चति अवमुच्य एकशाटिकम् उत्तरासङ्गं करोति कृत्वा तीर्थकराभिमुखः सप्ताष्टपदानि अनुगच्छति अनुगम्य वाम जानुम्-अञ्चति दक्षिण जानु धरणितले निधाय त्रिकृत्वः मूर्धानं धरणितले निम्नयति निम्नयित्वा ईषत् प्रत्युन्नमति प्रत्युन्नम्य Oकटक-तुटिकस्तब्धभुजान् संहरति संहृत्य करतलपरिगृहीतां दशनखा शिरस्यावर्तां मस्तके अञ्जलिं कृत्वा एवमवादीत्- ४ "उत्पाटयति"-ऊर्ध्वं करोति । x "निम्नयति"-नीचैः करोति । + 'घोलत्' शब्दस्य द्वितीयाबहुवचनम् । घोलन्ति'-चलानि-चञ्चलानि इति भावः । = -स्य नमनस्य-पा० १-४ ।

O "कटक-तुटिकैः-हस्ताभरण-बाह्वाभरणविशेषै."-औ० वृ० ।

सूर्याभदेवेन भगवान् स्तुतः

[१४] ○नमोऽत्थु णं अरिहंताणं भगवंताणं आदिगराणं तित्थगराणं सयंसंबुद्धाणं पुरिसुत्तमाणं पुरिससीहाणं पुरिसवरपुण्डरीयाणं पुरिसवरगन्धहत्थीणं लोगुत्तमाणं लोगनाहाणं लोगहिआणं लोगपईवाणं लोगपज्जोयगराणं अभयदयाणं चक्खुदयाणं मग्गदयाणं जीवदयाणं सरणदयाणं बोहिदयाणं धम्मदयाणं धम्मदेसयाणं धम्मनायगाणं धम्मसारहीणं धम्मवरचाउरंतचक्कवट्टीणं अप्पडिहयवरनाणदंसणधराणं वियट्टछउमाणं जिणाणं जावयाणं तिण्णाणं तारयाणं बुद्धाणं बोहयाणं मुत्ताणं मोयगाणं सव्वन्नूणं सव्वदरिसीणं सिवं अयलं अरुयं अणंतं अक्खयं अव्वाबाहं अपुणरावत्तियं सिद्धिगइनामधेयं ठाणं संपत्ताणं ।

[१५] नमोऽत्थु णं समणस्स भगवओ महावीरस्स आदिगरस्स तित्थयरस्स जाव [कण्डिका १४] संपाविउकामस्स, वन्दामि णं भगवन्तं तत्थगयं इहगते, [1]पासइ मे भगवं तत्थगते इहगतं [2]ति कट्टु वन्दति णमंसति [3]वंदित्ता णमंसित्ता [4]सीहासणवरगए [5]पुव्वाभिमुहं सण्णिसण्णे ।

---

[१५] १ पश्यति मां स भगवान् तत्रगतः इहगतम् २ इति कृत्वा वन्दते–स्तौति नमस्यति–कायेन मनसा च ३ वन्दित्वा नमस्यित्वा च भूयः ४ सिंहासनवरगतः गत्वा च ५ पूर्वाभिमुखं सन्निषण्णः ।

---

[१४] ○ एषां शब्दानां व्याख्यानं पृ० ३० ⊖टिप्पणे द्रष्टव्यम् केवलं विभक्तिभेदः । तत्र अनागतानां तु व्याख्यानमेवं बोध्यम्–नमोऽस्तु अर्हताम् भगवताम् स्वयंसंबुद्धानाम् लोकोत्तमानाम् लोकनाथानाम् लोकहितानाम् लोकप्रदीपानाम् लोकप्रद्योतकराणाम् शरणदयानाम् बोधिदयानाम् धर्मदयानाम् धर्मदेशकानाम् धर्मनायकानाम् धर्मसारथीनाम्....सम्प्राप्तानाम्

[१६] [१]तए णं [२]तस्स–सूरियाभस्स–[३]इमे [४]एतारूवे *[५]अज्झत्थिते [६]चिंतिते [७]पत्थिते [८]मणोगते [९]संकप्पे [१०]समुपज्जित्था–
[१७] [११]सेयं [१२]खलु [१३]मे समणे भगवं महावीरे जम्बूदीवे दीवे भारहे वासे आमलकप्पाए णयरीए वहिया अम्ब-सालवणे चेइए अहापडिरूवं उग्गहं उग्गिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणे विहरति, तं महाफलं खलु तहारूवाणं भगवन्ताणं णामगोयस्स वि सवणयाए किमङ्ग पुण अभिगमणवन्दणणमंसणपडिपुच्छणपज्जुवासणयाए? एगस्स वि आरियस्स धम्मियस्स सुवयणस्स सवणयाए किमङ्ग पुण विउलस्स अट्ठस्स गहणयाए? तं गच्छामि णं [१३]समणं भगवं महावीरं वन्दामि णमंसामि सक्कारेमि

[१६] १ ततः निषदनानन्तरम् २ तस्य–सूर्याभदेवस्य ३अयम् ४एतद्रूपः सङ्कल्पः समुदपद्यत। कथम्भूतः? इत्याह–५मनोगतः मनसि गतो–व्यवस्थितः नाद्यापि वचसा प्रकाशितस्वरूप इति भावः। पुनः कथम्भूतः? इत्याह–६आध्यात्मिकः आत्मनि अधि अध्यात्मम् तत्र भव आध्यात्मिकः–आत्मविषय इति भावः। सङ्कल्पश्च द्विधा भवति–कश्चिद् ध्यानात्मकः अपरश्चिन्तात्मकः, तत्रायं चिन्तात्मकः इति प्रतिपादनार्थमाह–७ चिन्तितः चिन्ता सञ्जाता अस्येति चिन्तितः–चिन्तात्मक इति भावः, सोऽपि कश्चिदभिलाषात्मको भवति कश्चिदन्यथा, तत्रायमभिलाषात्मकः, तथा चाह–८ प्रार्थितः प्रार्थनं प्रार्थः–णिजन्तत्वात् 'अल्'प्रत्ययः–प्रार्थः सञ्जातोऽस्येति प्रार्थितः–अभिलाषात्मक इति भावः। किंस्वरूपः? इत्याह–

[१७] ९ श्रेयः ४ १० खलु निश्चितम् ११ मे मम श्रमणं भगवन्तं महावीरं वन्दितुं कायेन मनसा च प्रणन्तुम्। सत्कार-

* अत्र मूले टीकायां च पदाना व्युत्क्रमः। 8 इदं विवरणं प्रस्तुतं मूलपाठं शब्दशो नानुसरति अतो ज्ञायते यत् विवरणकारस्य दृष्टौ कश्चिद्

सम्माणेमि कल्लाणं मङ्गलं चेतियं देवयं पज्जुवासामि, एयं मे पेच्चा हियाए सुहाए खमाए णिस्सेयसाए आणुगामियत्ताए भविस्सति त्ति[१] कट्टु एवं[२] संपेहेइ[३], एवं संपेहित्ता आभिओगे[४] देवे सद्दावेइ[५] सद्दावित्ता[६] एवं[७] वयासी–

[१८] एवं[८] खलु देवाणुप्पिया[९]! समणे भगवं महावीरे जम्बूदीवे दीवे भारहे वासे आमलकप्पाए नयरीए बहिया अम्बसालवणे चेइए अहापडिरूवं उग्गहं उग्गिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणे विहरइ। तं गच्छह णं तुमे देवाणुप्पिया! जम्बूदीवं[११] दीवं भारहं[१२] वासं आमलकप्पं[१३] णयरिं

---

यितुम्–कुसुमाञ्जलिमोचनेन पूजयितुम्, सम्मानयितुम्–उचितप्रतिपत्तिभिराराधयितुम्, कल्याणं कल्याणकारित्वात् मङ्गलं दुरितोपशमकारित्वात् देवतां–देवं त्रैलोक्याधिपतित्वात् चैत्यं सुप्रशस्तमनोहेतुत्वात् पर्युपासितुं–सेवितुम् १ इतिकृत्वा इतिहेतोः २ एवं यथा वक्ष्यमाणं तथा ३ सम्प्रेक्षते बुद्ध्या परिभावयति, संप्रेक्ष्य च ४ आभियोगिकान्–आभिमुख्येन योजनं अभियोगः–प्रेष्यकर्मसु व्यापार्यमाणत्वम्–अभियोगेन जीवन्ति इति आभियोगिकाः "वेतनादेर्जीवति"[६–४–१५ हैमश०]इति 'इकण्'प्रत्ययः–आभियोगिकाः–स्वकर्मकरास्तान् ५ शब्दापयति–आकारयति ६ शब्दापयित्वा च तेषां सम्मुखम् ७ एवमवादीत्–

[१८] ८ एवं खलु देवानांप्रियाः! इत्यादि सुगमम् नवरं ९ देवानांप्रियाः–ऋजवः प्राज्ञाः। १० यस्मादेवं भगवान् विहरन् वर्तते तत्–तस्माद्–देवानांप्रियाः! यूयं गच्छत ११ जम्बूद्वीपं द्वीपम् तत्रापि १२ भारतं वर्षम् तत्रापि १३ आमलकल्पां नगरीम्

---

परिवर्तितो मूलपाठो भवेत्।

[1]अम्बसालवणं चेइयं [2]समणं भगवं महावीरं [3]तिक्खुत्तो [4]आयाहिणपयाहिणं करेह करेत्ता [5]वंदह णमंसह वन्दित्ता णमंसित्ता [6]साइं साइं [7]नामगोयाइं [8]साहेह साहित्ता [9]समणस्स भगवओ महावीरस्स [10]सव्वओ [11]समन्ता [12]जोयण-परिमण्डलं [13]जं किंचि 8 [14]तणं वा [15]पत्तं वा [16]कट्ठं वा सक्करं वा [17]असुइं [18]अचोक्खं वा [19]पूइअं [20]दुब्भिगन्धं [21]तं सव्वं [22]आहुणियं आहुणिय [23]एगन्ते [24]एडेह एडेत्ता

तत्रापि १ आम्रशालवनं चैत्यम् २ श्रमणं भगवन्तं महावीरं ३ त्रिकृत्वः–त्रीन् वारान् ४ आदक्षिणप्रदक्षिणं कुरुत–आदक्षिणाद्–दक्षिणहस्तादारभ्य प्रदक्षिणः–परितो भ्राम्यतो दक्षिण एव आदक्षिणप्रदक्षिणस्तं कुरुत। कृत्वा च ५ वन्दध्वम् नमस्यत, वन्दित्वा नमस्यित्वा च ६ स्वानि–स्वानि आत्मीयानि आत्मीयानि ७ नामगोत्राणि, गोत्रम्–अन्वर्थस्तेन युक्तानि नामानि नामगोत्राणि। ○राजदन्तादिदर्शनात् 'नाम' शब्दस्य पूर्वनिपातः। ८ साधयत–कथयत, कथयित्वा च ९ श्रमणस्य भगवतो महावीरस्य १० सर्वतः–सर्वासु दिक्षु ११ समन्ततः–सर्वासु विदिक्षु १२ योजनपरिमण्डलं–परिमाण्डल्येन योजनप्रमाणं यत् क्षेत्रं तत्र १३ यत् १४ तृणं किलिञ्चादि १६ काष्ठं वा काष्ठशकलं वा १५ पत्रं वा निम्बाऽश्वत्थादिपत्रजातम् कचवरं वा–श्लक्ष्णतृणधूल्यादिपुञ्जरूपं कथम्भूतम्? इत्याह–१७ अशुचि अशुचिसमन्वितम्, १८ अचोक्षम्–अपवित्रम्, १९ पूयितं–कुथितम् अत एव २० दुरभिगन्धं २१ तत् संवर्त्तकवातविकुर्वणेन २२ आहत्याहत्य २३ एकान्ते–योजनपरिमण्डलात् क्षेत्राद् दवीयसि देशे २४ एडयत अप-

8 अत्रापि विवरणकारस्य दृष्टौ कश्चित् परिवर्तितः मूलपाठो भवेत्। स च विवरणानुसारेण एवं संभवेत्–'तणं वा कट्ठं वा कट्ठसगलं वा पत्तं वा कयवरं वा असुइं' ○ "राजदन्तादिषु" [३–१–१४९ हैमश०]

णच्चोदगं णाइमट्टियं पविरल[3]पप्फुसियं रयरेणु[4]विणासणं दिव्वं[5] सुरभिगन्धोदयवासं[6] वासंह[7] वासित्ता णिहयरयं[8] णट्ठरयं[9] भट्ठरयं[10] उवसंतरयं[11] पसंतरयं[12] करेह[13] करित्ता कुसुमस्स[14] जाणुस्सेहपमाणमित्तं[15] ओहिं[16] वासं[17] वासह वासित्ता जलयथलयभासुरप्पभूयस्स[18]

नयत एडयित्वा च १ नात्युदकम् २ नाप्यतिमृत्तिकं यथा भवति एवं ६ सुरभिगन्धोदकवर्षं ७ वर्षत, कथम्भूतम् ? इत्याह–५ दिव्यं–प्रधानं सुरभिगन्धोपेतत्वात्, पुनः कथम्भूतम्? इत्याह–३ प्रकर्षेण यावद् रेणवः स्थगिता भवन्ति तावन्मात्रेणोत्कर्षेणेति भावः, स्पर्शनानि प्रस्पृष्टानि प्रविरलानि घनभावे कर्दमसम्भवात् प्रस्पृष्टानि–प्रकर्षवन्ति स्पर्शनानि–मन्दस्पर्शनसम्भवे रेणुस्थगनासम्भवात्–यस्मिन् वर्षे तत् प्रविरलप्रस्पृष्टम् अत एव ४ श्लक्ष्णतरा रेणुपुद्गला–रजः त एव स्थूला रेणवः, रजांसि च रेणवश्च रजोरेणवस्तेषां विनाशनम्। एवम्भूतम् च सुरभिगन्धोदकं वर्षं वर्षित्वा योजनपरिमण्डलं क्षेत्रं ८ निहतरजः कुरुतेति योगः, निहतं रजो–भूय उत्थानासम्भवात्–यत्र तद् निहतरजः, तत्र निहतत्वं रजसः क्षणमात्रमुत्थानाभावेनापि सम्भवति तत आह–९ नष्टरजः–नष्टं सर्वथाऽदृश्यीभूतं रजो यत्र तद् नष्टरजः, तथा १० भ्रष्टं–वातोद्धूततया योजनमात्रात् क्षेत्राद् दूरतः पलायितं रजो यस्मात् तद् भ्रष्टरजः एतदेव एकार्थिकद्वयेन प्रकटयति–११ उपशान्तरजः १२ प्रशान्तरजः १३कुरुत, कृत्वा च १४ कुसुमस्य जातावेकवचनं कुसुमजातस्य १५ जानूत्सेधप्रमाणमात्रम् १६ ओघेन–सामान्येन सर्वत्र योजनपरिमण्डले क्षेत्रे १७ वर्षं वर्षत, किंविशिष्टस्य कुसुमस्य? इत्याह–१८ जलजं च स्थलजं च जलजस्थलजम्–जलजं पद्मादि स्थलजं विचकिलादि भास्वरं–दीप्यमानम् प्रभूतं–अतिप्रचुरम् ततः कर्मधारयः, भास्वरं च तत् प्रभूतं च भास्वरप्रभूतं जलजस्थलजं च तत् भास्वरप्रभूतं च जलजस्थ-

विंट[1]ट्ठाइस्स दसद्ध[2]वण्णस्स कालागुरु[3]पवरकुन्दुरुक्कतुरुक्कधूवमघमघंतगन्धुद्धूयाभिरामं सुगन्धवरगन्धियं गन्धव[4]ट्टिभूतं दिव्वं सुरवराभिगमणजोग्गं करेह कारवेह करित्ता य कारवेत्ता य खिप्पामेव[11] एयमाणत्तियं[12] पच्चप्पिणह[13] । ॥५५॥

---

लजभास्वरप्रभूतम् तस्य पुनः कथम्भूतस्य ? इत्याह–१ वृन्तेन–अधोवर्तिना तिष्ठतीत्येवंशीलं वृन्तस्थायि तस्य वृन्तस्थायिनः–वृन्तमधोभागे उपरि पत्राणीत्येवंस्थानशीलस्येत्यर्थः । २ दशानामर्धं पञ्च दशार्धं वर्णा यस्य तद् दशार्धवर्णं तस्य पञ्चवर्णस्येति भावः । इत्थम्भूतस्य च कुसुमजातस्य वर्षं वर्षित्वा ततः योजनपरिमण्डलं क्षेत्रं ६ दिव्यं–प्रधानं ७ सुरवराभिगमनयोग्यं ८ कुरुत । इत्यत आह–३ कालागुरुः प्रसिद्धः, प्रवरः–प्रधानः कुन्दुरुक्कः[1]–चीडा तुरुक्कं–सिल्हकम् कालागुरुश्च प्रवरकुन्दुरुक्कतुरुक्कौ च कालागुरुप्रवरकुन्दुरुक्कतुरुक्काः तेषां धूपस्य यो मघमघायमानो गन्धः उद्धूतः–इतस्ततो विप्रसृतस्तेनाभिरामं–रमणीयं कालागुरुप्रवरकुन्दुरुक्कतुरुक्कधूपमघमघायमानगन्धोद्धूताभिरामम् तथा ४ शोभनो गन्धो येषां ते सुगन्धास्ते च ते वरगन्धाश्च–वासाः सुगन्धवरगन्धास्तेषां गन्धः सोऽस्यास्तीति सुगन्धवरगन्धिकम् "अतोऽनेकस्वरात्" [७–२–६ हैमश०] इति 'इक' प्रत्ययः, अत एव ५ गन्धवर्त्तिभूतम्–सौरभ्यातिशयात् गन्धद्रव्यगुटिकाकल्पमिति भावः, न केवलं स्वयं कुरुत किन्त्वन्यैरपि ९ कारयत १० कृत्वा च कारयित्वा च १२ एताम् आज्ञप्तिकां ११ क्षिप्रमेव–शीघ्रमेव १३ प्रत्यर्पयत–यथोक्तकार्यसम्पादनेन सफलां कृत्वा निवेदयत ।

---

१ कुन्दरुक्कः–पा० ५ । कुन्दरुक्कतुरुक्क चीडाभिधं गन्धद्रव्यविशेषः–भा० १ ।

रायपसेणइयं।

॥५६॥

[१९] [१]तए णं [२]ते आभियोगिया देवा सूरि[३]याभेणं देवेणं [४]एवं वुत्ता समाणा ह[५]ट्ठतुट्ठ–जाव–हियया ×कर[६]यलपरिग्गहियं ×दसनहं [७]सिरसावत्तं× [८]मत्थए [९]अंजलिं [११]कट्टु ‘[१२]एवं देवो ! तहत्ति आणाए’ वि[१३]णएणं व[१४]यणं पडिसुण[१५]न्ति, ‘एवं देवो तहत्ति आणाए’ विणएणं वयणं पडिसुणे[१६]त्ता उत्त[१७]रपुरत्थिमं दिसिभागं अव[१८]क्कमन्ति, उत्तरपुरत्थिमं दिसिभागं अवक्कमित्ता वेउ[१९]व्वियसमुग्घाएणं समोहण्ण[२०]न्ति समोहणित्ता संखे[२१]ज्जाइं जोयणाइं द[२२]ण्डं

आभियोगिकानां श्रीमहावीरं प्रति गमनम्

[१९] १ ततो ‘णं’ इति पूर्ववत् २ ते आभियोगिका देवाः ३ सूर्याभेण देवेन ४ एवमुक्ताः सन्तः ५ ‘हट्ठतुट्ठ–जाव हियया’ इति, अत्र ‘यावत्’ शब्दकरणात् [पृ० ४३ टिप्पण १०] इति द्रष्टव्यम्। १० द्वयोर्हस्तयोरन्योऽन्यान्तरिताङ्गुलिकयोः सम्पुटरूपतया यदेकत्र मीलनं सा अञ्जलिः ताम् ६ करतलाभ्यां परिगृहीता–निष्पादिता करतलपरिगृहीता ताम् ७ दश नखा यस्यां एकैकस्मिन् हस्ते नखपञ्चकसम्भवात् दशनखा ताम् तथा ८ आवर्त्तनमावर्त्तः शिरस्यावर्त्तो यस्याः सा शिरस्यावर्त्ता–‘कण्ठेकालः’ ‘उरसिलोमा’ इत्यादिवत् अलुक्समासः–ताम् अत एवाह–९ मस्तके ११ कृत्वा १३ विनयेन १४ वचनं सूर्याभस्य देवस्य १५ प्रतिशृण्वन्ति–अभ्युप–गच्छन्ति। कथम्भूतेन विनयेन ? इत्याह–१२ ‘हे देव ! एवं यथैव यूयमादिशत तथैवाज्ञया =भवदादेशेन कुर्मः’ इत्येवंरूपेण। ‘देवो’ इत्यत्र ओकारः आमन्त्रणे प्राकृतलक्षणवशात् यथा ‘अज्जो !’ इत्यत्र। १६प्रतिश्रुत्य वचनम् १७उत्तरपूर्वदिग्भागम् ईशानकोणमित्यर्थः, तस्यात्यन्तं प्रशस्तत्वात् १८ अपक्रामन्ति–गच्छन्ति अपक्रम्य च १९ वैक्रियसमुद्घातेन वैक्रियकरणाय प्रयत्नविशेषेण २० समवहन्यन्ते समवहता भवन्तीत्यर्थः, समवहताश्चात्मप्रदेशान् दूरतो विक्षिपन्ति, तथा चाह–२२ दण्ड इव दण्डः–

× एतानि त्रीणि अञ्जलेर्विशेषणानि। – –गच्छन्ति अपक्रम्य–पा० ५–४। भा० १। = भगवदा–भा० २।

निस्सिरंति, तंजहा–रयणाणं[2] वयराणं[3] वेरुलियाणं[4] लोहियक्खाणं[5] मसारगल्लाणं[6] हंसगब्भाणं[7] पुलगाणं[8] सोगन्धियाणं[9] जोईरसाणं[10] अञ्जणाणं[11] अञ्जणपुलगाणं[12] रययाणं[13] जायरूवाणं[14] अङ्काणं[15] फलिहाणं[16] रिट्ठाणं[17] अहाबायरे[18] पुग्गले[19] परिसाडंति[20] परिसाडित्ता अहासुहुमे[21] पुग्गले[22] परियायंति[23] परियाइत्ता दोच्चं[24] पि वेउव्वियसमुग्घाएणं समोहण्णंति[25] समोहणित्ता उत्तरवेउव्वियाइं[26] रूवाइं विउव्वंति[27]

ऊर्ध्वाध आयतः शरीरबाहल्यो जीवप्रदेशसमूहस्तं शरीराद् बहिः २१संख्येयानि योजनानि यावत् १ निसृजन्ति–निष्काशयन्ति, निसृज्य तथाविधान् पुद्गलानाददते । एतदेव दर्शयति, तद्यथा २–रत्नानाम्–कर्केतनादीनाम् ३ वज्राणाम् ४ वैडूर्याणाम् ५ लोहिताक्षाणाम् ६ मसारगल्लानाम् ७ हंसगर्भाणाम् ८ पुलकानाम् ९ सौगन्धिकानाम् १० ×ज्योतीरसानाम् ११ अञ्जनानाम् १२ अञ्जनपुलकानां १३ रजतानाम् १४ जातरूपाणाम् १५ अङ्कानाम् १६ स्फटिकानाम् १७ रिष्टानाम् १८ योग्यान् यथाबादरान् १९–असारान् पुद्गलान् २० परिशातयन्ति २१ यथासूक्ष्मान् २२–सारान् पुद्गलान् २३ पर्याददते पर्यादाय च चिकीर्षितरूपनिर्माणार्थं २४द्वितीयमपि वारं वैक्रिय*समुद्घातेन २५समवहन्यन्ते, समवहत्य च यथोक्तानां रत्नादीनाम्≡अयोग्यान् यथाबादरान् पुद्गलान् परिशातयन्ति यथासूक्ष्मानाददते आदाय च ईप्सितानि २६ उत्तरवैक्रियाणि २७ विकुर्वन्ति ननु रत्नादीनां प्रायोग्याः पुद्गला औदारिकाः, उत्तरवैक्रियरूपयोग्याश्च पुद्गला ग्राह्या वैक्रियास्ततः कथमेवमुक्तमिति ? उच्यते, इह रत्नादिग्रहणं सारतामात्रप्रतिपादनार्थम् नतु 'रत्नादीनामेव' परिग्रहार्थम् ततो रत्नादीनामिवेति द्रष्टव्यमिति न कश्चिद् दोषः । अथवा औदारिका अपि ते8 गृहीताः सन्तो

× ज्योतीरत्नानाम्–पा० ५–४ भा० १ । * समुद्घट्टनेन–पा० ५–४ भा० २ । ≡–ना योग्याना य–पा० ५–४ भा० १ । 8 तैः–मु० पु० ।

वि[1]उव्वित्ता [2]ताए उक्किट्ठाए[3] तुरियाए[4] चवलाए[5] चंडाए[6] जवणाए[7] सिग्घाए[8] उद्धूयाए[9] दिव्वाए[10] देवगईए[11] [12]तिरियं [13]असंखेज्जाणं दीवसमुद्दाणं [14]मज्झंमज्झेणं वीईवयमाणे वीईवयमाणे जेणेव जंबुद्दीवे दीवे जेणेव भारहे वासे जेणेव आमलकप्पा णयरी जेणेव अंबसालवणे चेतिए जेणेव समणे भगवं महावीरे तेणेव उवागच्छंति, तेणेव उवागच्छित्ता समणं भगवं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेंति वंदंति नमंसंति वंदित्ता नमंसित्ता एवं वदासि—अम्हे णं भंते ! सूरियाभस्स देवस्स आभियोगा देवा देवाणुप्पियाणं वंदामो णमंसामो सक्कारेमो सम्माणेमो

वैक्रियतया परिणमन्ते, पुद्गलानां तत्तत्सामग्रीवशात् तथातथापरिणमनस्वभावत्वात् अतोऽपि न कश्चिद्दोषः । १तत एवमुत्तरवैक्रियाणि रूपाणि कृत्वा २ तया देवजनप्रसिद्धया ३ उत्कृष्टया प्रशस्तविहायोगतिनामोदयात् प्रशस्तया ४ शीघ्रसञ्चरणात् त्वरितया त्वरा सञ्जाता अस्या इति त्वरिता ५ तया +प्रदेशान्तराऽऽक्रमणमिति चपला तया ६ ×क्रोधादविमृश्यैव श्रमासंवेदनात् चण्डेव चण्डा तया ८ निरन्तरं शीघ्रत्वगुणयोगात् शीघ्रा तया शीघ्रया ७ परमोत्कृष्टवेगपरिणामोपेता जवना तया ९ वातोद्धूतस्य दिगन्तव्यापिनो रजस इव या गतिः सा उद्धूता तया १० दिव्यया–दिवि देवलोके भवा दिव्या तया ११ देवगत्या १२ तिर्यग् १३असंख्येयानां द्वीपसमुद्राणां १४ मध्यंमध्येन=–मध्येनेत्यर्थः । अवपतन्तोऽवपतन्तः–समागच्छन्त इति भावः, पूर्वान् द्वीपसमुद्रान् व्यतिक्रामन्तो व्यतिक्रामन्तः उल्लङ्घयन्त इत्यर्थः । शेषं सुगमं यावत्—

+प्रदेशान्तराक्रमेणमिति–भा० १। त्वरितगत्या हि प्रदेशान्तराक्रमणं भवति इति त्वरितगतिरेव 'चपला' शब्देन विशेष्यते इति भावो गम्यते।
× क्रोधादिव श्रमा–भा० २। क्रोधाविष्टस्येव श्र–मु० पु०। = पृ० ४१ टिप्पण ८।

कल्लाणं मगलं देवयं चेइयं पज्जुवासामो।

[२०] *देवाइ[१] समणे भगवं महावीरे ते[२] देवे एवं[३] वदासी–पोराणमेयं[४] देवा! +जीयमेयं देवा! किच्चमेयं देवा!





१ ×देवादियोगात् देवादिः श्रमणो भगवान् महावीरः २ तान् देवान् ३ एवमवादीत्–४पुराणेषु भवं पौराणमेतत् कर्म भो देवाः! चिरन्तनैरपि देवैः कृतमिदं चिरन्तनान् तीर्थङ्करान् प्रतीति तात्पर्यार्थः। 8देयमेतद् वन्दनादिकं तीर्थकृद्भ्यो भो देवाः!

* देवा य समणे भा० २। + नायं पाठः पा० ३। परंतु केनचिद् वाचकेन तत्प्रतिकर्णिकाया लिखितः।

×अत्र विवरणकारः 'देवाइ' इत्येवंरूपं मूलपाठं दृष्ट्वा "देवादियोगात् देवादिः" इति तद्व्याख्यानं करोति। अनेन विवरणेन 'देवादिः इति पद 'श्रमणो भगवान्' इत्यस्य विशेषणभूत जायते परतु 'देवादियोगात् देवादिः' इति व्याख्याय विवरणकारः भगवतो महावीरस्य कमभिनवं विशेषं ज्ञापयति इति न सम्यग् अवगम्यते। 'देवेषु आदिरूप' योगो यस्य अर्थात् सर्वेषु देवेषु आदिभूतो भगवान्' इत्यर्थोऽभिप्रेतस्तदा संगतिर्भवेत्। परतु नायमर्थः प्रासादिकः। मदभिप्रायेण तु 'देवा इ' इति पदद्वयम्। तस्यार्थस्तु 'देवा'–'हे देवाः' 'इ'–'इति' सबोध्य भगवान् तान् देवान् एवमुवाच। 'इ' शब्दः 'इति–इइ–इअ–इ' एतत्क्रमेण 'इति' शब्दस्य रूपान्तरम्। एवंप्रकारा वाक्यरचना अन्यत्रापि समायाता। यथा "गोयमा इ समणे भगवं महावीरे भगव गोयमं एव वयासी" [व्याख्याप्रज्ञप्ति द्वि० श० उ० १ स्कन्दक] अर्थात् "'गोयमा'—'गौतम!' 'इ'–'इति संबोध्य' श्रमणो भगवान् महावीरः भगवन्तं गौतमम् एवम् अवादीत्"। व्याख्याप्रज्ञप्तिटीकाकृता श्रीमता अभयदेवसूरिणाऽपि मदभिप्राय एव समर्थितः। तथाहि–"'गोयमा इ' त्ति गौतम! इति एवम्, आमन्त्र्य इति शेषः"। अतः 'देवा इ' इति पदद्वयमेव सुसंगतम्। 8 मूलपाठे 'पोराणमेयं देवा! इति पाठानन्तरम् 'जीयमेय देवा!' इति पाठः सर्वेषु अपि मूलप्रतिपुस्तकेषु लभ्यते परंतु टीकाप्रतिपुस्तकेषु क्वापि तत्पाठविवरण न लब्धम्। टीकाप्रतिपुस्तकेषु सर्वेष्वपि 'पोराण'–इत्यादिपाठविवरणानन्तरम् 'देयमेतद् वन्दनादिकम्' इत्येव पाठो लब्धः इति।

॥६०॥ 'करणिज्जमेयं देवा! आचिन्नमेयं देवा! अब्भणुण्णायमेयं देवा! जं णं भवणवइ-वाणमंतर-जोइसिय-वेमाणिया देवा अरहंते भगवंते वंदंति नमंसंति वंदित्ता नमंसित्ता तओ साइं साइं णामगोयाइं =साविंति तं पोराणमेयं देवा! जाव अब्भणुण्णायमेयं देवा!।

३ यतोऽभ्यनुज्ञातमेतत् सर्वैरपि तीर्थकृद्भिर्भो देवाः! ततः कर्त्तव्यमेतद् युष्मादृशां भो देवाः! एतदेव व्याचष्टे-१ करणीयमेतद् भो देवाः! २ आचीर्ण०मेतत् कल्पभूतमेतद् भो देवाः! किं तत्? इत्याह-४ 'जं णं' इत्यादि, यत् 'णं' इति पूर्ववत् ५ भवनपति-व्यन्तर-ज्योतिष्क-वैमानिका देवाः ६ अर्हतो भगवतो ७ वन्दन्ते नमस्यन्ति, वन्दित्वा नमस्यित्वा च पश्चात् ८ स्वानि स्वानि-आत्मीयानि आत्मीयानि नामगोत्राणि ९ कथयन्ति, ततो युष्माकमपि भो देवाः! १० पौराणमेतत् यावत्-आचीर्णमेतदिति।

= साविति पा० १-२। * अत्रापि मूलपाठ-विवरणकारलब्धमूलपाठयोर्भेदः। स च यथा-मूले 'किच्चमेय देवा! करणिज्जमेयं देवा! आचिन्नमेयं देवा। अब्भणुण्णायमेय देवा!' इति पाठक्रमः। विवरणे तु 'किच्चमेयं' इति पाठो न व्याख्यातः किन्तु 'करणिज्जमेय' इति पाठव्याख्यानात् पूर्वमेव 'अब्भणुण्णायमेय' इति पाठविवरणम्, तदनन्तर 'करणिज्जमेय' इत्यस्य विवरणम्। तदनन्तरं च 'आचिन्नमेयं' इत्यस्य विवरणम्। तात्पर्यं तु न भिद्यते। केवलं शब्दानुपूर्वी विभिन्ना। विवरणकारलब्धमूलपाठानुसारी पाठ एवं कल्पनीयः-पोराणमेयं देवा! देयमेयं देवा! अब्भणुण्णायमेय देवा! करणिज्जमेय देवा! आचिण्णमेय देवा!। ० -मेतत् भो देवाः-पा० ५-४। भा० १।

रायपसेणइयं।

[२१] ⊖तए णं ते आभिओगिया देवा समणेणं भगवया महावीरेणं एवं वुत्ता समाणा हट्ठ जाव हियया समणं भगवं महावीरं वन्दन्ति णमंसंति वन्दित्ता णमंसित्ता उत्तरपुरत्थिमं दिसीभागं अवक्कमंति अवक्कमित्ता वेउव्वियसमुग्घाएणं समोहण्णन्ति समोहणित्ता संखेज्जाइं जोयणाइं दण्डं निस्सिरंति। तं जहा–रयणाणं जाव [कण्डिका १९ पं० ५] रिट्ठाणं अहाबायरे पोग्गले परिसाडंति अहाबायरे परिसाडित्ता दोच्चं पि वेउव्वियसमुग्घाएणं समोहण्णन्ति समोहणित्ता संवट्टयवाए विउव्वन्ति । से[2] जहानामए[3] भइयदारए[4] सिया[5] तरुणे[6]

[२१] १ 'तए णं' इत्यादि सुगमम् २ स वक्ष्यमाणगुणो ३ यथानामकोऽनिर्दिष्टनामकः कश्चिद् ४ भृतिकदारकः–भृतिं करोति भृतिकः–कर्मकरः तस्य दारको भृतिकदारकः ५ स्यात् , किंविशिष्टः ? इत्याह–६तरुणः प्रवर्ध○मानवयाः आह–दारकः प्रवर्धमानवया एव भवति ततः किमनेन विशेषणेन ? न, आसन्नमृत्योः प्रवर्धमानवयस्त्वाभावात् , न ह्यासन्नमृत्युः प्रवर्धमानवया भवति, न च तस्य

⊖ ततः ते आभियोगिका देवाः श्रमणेन भगवता महावीरेण एवम् उक्ताः सन्तः हृष्ट यावत् हृदयाः। [पृ० ४३ टिप्पण १०] श्रमणं भगवन्तं महावीरं वन्दन्ते नमस्यन्ति वन्दित्वा नमस्यित्वा उत्तरपौरस्त्यं दिग्भागं अपक्रामन्ति अपक्रम्य वैकुर्विकसमुद्घातेन समवहन्यन्ते समवहत्य संख्येयानि योजनानि दण्ड निसृजन्ति। तद् यथा—रत्नानां यावत् रिष्टानाम् [कण्डिका १९ पं०५] यथाबादरान् पुद्गलान् परिशातयन्ति यथाबादरान् परिशात्य द्वितीयमपि वैकुर्विकसमुद्घातेन समवहन्यन्ते, समवहत्य संवर्तकवातान् विकुर्वन्ति।

8 सर्वेषु मूलपाठ–आदर्शेषु कम्मारदारए। परन्तु विवरणकारेण 'भइअदारए' पाठो लब्धः स एव च व्याख्यातः नात्र अर्थभेदः।

○मानवया एव–पा०४ भा०२। मानतया एव–भा० १।

आभियोगिका देवा श्रीमहावीरस्य सर्वतः समन्तात् स्थलं प्रमार्जयन्ति ॥६१॥

[1]बलवं [2]जुगवं [3]जुवाणे -अप्पायंके [5]थिरग्ग×हत्थे [6]दढपाणिपायपिट्ठन्तरो+रुपरिणए [7]घणनिचियवट्टवलियखंधे [8]चम्मेट्ठगदुघणमुट्ठियसमाहयगत्ते [9]उरस्सबलसमन्नागए

विशिष्टसामर्थ्यसम्भवः आसन्नमृत्युत्वादेव, विशिष्टसामर्थ्यप्रतिपादनार्थश्चैष आरम्भस्ततोऽर्थवद् विशेषणम्। अन्ये तु व्याचक्षते–"इह यद् द्रव्यं विशिष्टवर्णादिगुणोपेतमभिनवं च तत् तरुणमिति लोके प्रसिद्धम् यथा–'तरुणमिदमश्वत्थपत्रम्' इति। ततः स सूतिकदारकस्तरुण इति। किमुक्तं भवति ?–अभिनवो विशिष्टवर्णादिगुणोपेतश्च"इति १बलं–सामर्थ्यं तद् यस्यास्तीति बलवान्। तथा २युगं–सुषमदुष्षमादिकालः स स्वेन रूपेण यस्यास्ति न दोषदुष्टः स युगवान्, किमुक्तं भवति ?–कालोपद्रवोऽपि सामर्थ्यविघ्नहेतुः स चास्य नास्तीति प्रतिपत्त्यर्थमेतद् विशेषणम् ३ युवा–यौवनस्थः युवावस्थायां हि बलातिशय इत्येतदुपादानम्। ४ अल्पशब्दोऽभाववाची, अल्पः–सर्वथा अविद्यमान आतङ्को–ज्वरादिर्यस्य सोऽल्पातङ्कः। ५ स्थिरोऽग्रहस्तो यस्य स स्थिराग्रहस्तः। ६ दृढानि–अतिनिबिडचयापन्नानि पाणिपादपृष्ठान्तरोरूणि परिणतानि यस्य स दृढपाणिपादपृष्ठान्तरोरुपरिणतः–। तथा ७ घनम्–अतिशयेन निचितौ–निबिडतरचयमापन्नौ वलिताविव वलितौ वृत्तौ स्कन्धौ यस्य स घननिचितवलितवृत्तस्कन्धः। ८ चर्मेष्टकेन द्रुघणेन मुष्टिकया च–मुष्ट्या समाहत्य समाहत्य ये निचितीकृतगात्रास्ते चर्मेष्टकद्रुघणमुष्टिकसमाहतनिचितगात्राः तेषामिव गात्रं यस्य स चर्मेष्टकद्रुघणमुष्टिकसमाहतनिचितगात्रः। ९ उरसि भवं उरस्यं तच्च तद् बलं च उरस्यबलं तत् समन्वागतः–समनुप्राप्तः उरस्यबलसमन्वागतः आन्तरोत्साह-

– अप्पायके थिरसंघयणे थिर—वि० वा०। × –हत्थे पडिपुण्णपाणि–वि० वा०। + –रुसंघायपरिणए–वि० वा०।
– "सुखादिदर्शनात् पाक्षिकः क्तान्तस्य परनिपातः" राय०वि०। पृ० ४८ * टिप्पण

तलजं[1]मलजुयल*बाहू लंघण[2]पवणजवणपमद्दणसमत्थे [3]छेए [4]दक्खे [5]पट्ठे [6]कुसले [7]मेधावी [8]णिउणसिप्पोवगए [9]एगं [10]महं [11]सलागाहत्थगं वा [12]दण्डसंपुच्छणिं वा [13]वेणुसलागिगं वा [14]गहाय [15]रायङ्गणं वा [16]रायंतेपुरं वा [17]देवकुलं वा [18]सभं वा [19]पवं

वीर्ययुक्त इति भावः। १ तलौ–तालवृक्षौ तयोर्यमलयुगलं–समश्रेणीकं युगलं तलयमलयुगलं तद्वदतिसरलौ पीवरौ च बाहू यस्य स तलयमलयुगलबाहुः। २लङ्घने–अतिक्रमणे, प्लवने–मनाक् पृथुतरविक्रमवति गमने, जवने–अतिशीघ्रगतौ प्रमर्दने–कठिनस्यापि वस्तुनश्चूर्णकरणे समर्थः लङ्घन-प्लवन-जवन-प्रमर्दनसमर्थः। क्वचित् 'लंघणपवणजवणवायामणसमत्थे' इति पाठः, तत्र व्यायामने–व्यायामकरणे इति व्याख्येयम्। ३ छेको–द्वासप्ततिकलापण्डितः। ४ दक्षः–कार्याणामविलम्बितकारी। ५ प्रष्ठो–वाग्मी। ६ कुशलः सम्यक्क्रियापरिज्ञानवान्। ७ मेधावी परस्पराव्याहतपूर्वापरानुसन्धानदक्षः, अत एव ८ निपुणं यथा भवति एवं शिल्पं–क्रियासु कौशलं उपगतः–प्राप्तो निपुणशिल्पोपगतः। ९एकं १० महान्तं ११शलाकाह*स्तकं–सरि8त्पर्णादिशलाकासमु×दायं सरित्पर्णादिशलाकामयीं सम्मार्जनीमित्यर्थः। 'वा'शब्दो विकल्पार्थः। १२दण्डयुक्ता =सम्पुंसनी–सम्मार्जनी दण्डसम्पुंसनी तां वा। १३वेणुः–वंशस्तस्य शलाका वेणुशलाकास्ताभिर्निर्वृत्ता वेणुशलाकिकी–वेणुशलाकामयी सम्मार्जनी तां वा १४गृहीत्वा १५राजाङ्गणं वा १६ राजान्तःपुरं वा १७देवकुलं वा १८सभां वा सन्तो भान्त्यस्यामिति सभा–ग्रामप्रधानानां नगरप्रधानानां वा यथासुखमवस्थानहेतुर्मण्डपिका–तां वा १९प्रपां वा

* –लफलिहनिभत्रा–त्रि० बा०। *–स्तकं परित्पर्णादि–पा० ५।–स्तकं सूरित्पर्णादि–भा० २।–स्तकसूरित्पर्णादि–भा०१। 8 अत्र 'सरित्पर्ण' शब्दः कमर्थं गमयति इति नावगम्यते। 'सरित्पर्ण' स्थाने 'श्रीपर्णी संभवेत्?। ×दायं शरित्पर्णादि–पा० ५। = सम्पुच्छनी मु०पु०।

वा आरामं वा उज्जाणं वा अ[3]तुरियं अ[4]चवलं अ[5]संभन्तं निरं[6]तरं सुनिउणं[7] [8]सव्वतो [9]समन्ता संपमज्जेज्जा,[10] ए[11]वामेव तेऽवि सूरियाभस्स देवस्स आभिओगिया देवा संवट्टयवाए विउव्वंति, विउव्विता समणस्स भगवओ महावीरस्स सव्वतो समंता जोयणपरिमण्डलं जं किंचि तणं वा पत्तं वा तहेव सव्वं आहुणिय आहुणिय ए[12]गंते एडेंति एडित्ता खि[13]प्पामेव उ[14]वसमन्ति। [कण्डिका १८ पं० ५]

पानीयशालां वा १ आगत्यागत्य भोगपुरुषा वरतरुणीभिः सह यत्र रमन्ते–क्रीडन्ति स आरामो नगरान्नातिदूरवर्त्ती क्रीडाश्रयः तरुखण्डः तम् २ ऊर्ध्वं विलम्बितानि प्रयोजनाभावात् यानानि यत्र तद् उद्यानं–नगरात् प्रत्यासन्नवर्त्ती यानवाहनक्रीडागृहाद्याश्रयस्तरुखण्डः तद् वा। ३ अत्वरितम् ४ अचपलम् ५ असम्भ्रान्तम् त्वरायां चापल्ये सम्भ्रमे वा सम्यक्कचवराद्यपगमासम्भवात्। ६ निरन्तरं न त्वपान्तरालमोचनेन, ७ सुनिपुणं श्लक्ष्णस्याप्यचोक्षस्यापसारणेन ८ सर्वतः–सर्वासु दिक्षु ९समन्ततः–सामस्त्येन १०सम्प्रमार्जयेत्। ११ 'एवमेव' इत्यादि सुगमं यावत्–'खिप्पामेव पच्चुवसमंति' इत्यादि । १२ एकान्ते तृणकाष्ठाद्यपनीय १३ क्षिप्रमेव–शीघ्रमेव १४ ⊖ प्रत्युपशाम्यन्ति प्रत्येकं ते आभियोगिका देवाः उपशाम्यन्ति –संवर्त्तकवायुविकुर्वणान्निवर्त्तन्ते संवर्त्तकवातमुपसंहरन्तीति भावः।

⊖ मूले तु उवसमन्ति, टीकायाम् 'प्रति'अधिकः।

[२२] [1]दोच्चं पि [2]वेउव्वियसमुग्घाएणं समोहण्णन्ति, समोहणित्ता अब्भवद्दलए [3] [4]विउव्वन्ति। [5]से जहाणामए भइगदारगे सिया तरुणे [कण्डिका २१ पं० ५] जाव-सिप्पोवगए [6]एगं महं [7]दगवारगं वा [8]दगकुम्भगं वा दगथालगं वा [9]दगकलसगं वा गहाय आरामं वा जाव [पृ० ६३ पं० २] पवं वा अतुरियं जाव सव्वतो समंता [10]आवरिसेज्जा, एवामेव तेऽवि सूरियाभस्स देवस्स आभियोगिया देवा अब्भवद्दलए विउव्वंति विउव्वित्ता खिप्पामेव [11]पतणतणायन्ति पतणतणाइत्ता खिप्पामेव [12]विज्जुयायंति विज्जुयाइत्ता समणस्स भगवओ महावीरस्स सव्वओ समन्ता [कं०१८ पं०५] जोयणपरिमण्डलं णच्चोदगं णातिमट्टियं तं पविरलपप्फुसियं रयरेणुविणासणं दिव्वं सुरभिगन्धो-

[२२] १ संवर्त्तकनातविकुर्वणार्थं हि यद् वेलाद्वयमपि वैक्रियसमुद्घातेन समवहननं तत् किलैकम् इदं तु अब्भ्रवार्दलकविकुर्वणार्थं द्वितीयमत उक्तम्—द्वितीयमपि वारं २ वैक्रियसमुद्घातेन समवहन्यन्ते समवहत्य च ३ अभ्रवार्दलकानि विकुर्वन्ति वाः पानीयं तस्य दलानि वार्दलान्येव वार्दलकानि मेघा इत्यर्थः अपो बिभ्रतीति 8अब्भ्राणि—मेघाः—आकाशमित्यर्थः, अब्भ्रे वार्दलकानि अब्भ्रवार्दलकानि तानि ४विकुर्वन्ति—आकाशे मेघान् विकुर्वन्तीत्यर्थः। ५'से जहानामए भइगदारगे सिया' इत्यादि पूर्ववत् यावत् [कंडिका २१पं०५] 'निउणसिप्पोवगए एगं महं' इत्यादि—स यथानामको भृतिकदारकः ६एकं महान्तम् दकवारकं वा मृत्तिकामयभाजनविशेषम् ७ दकघटम् ८दकस्थालकं वा-कंसादिमयमुदकभृतं भाजनं ९ दककलशं वा—उदकभृतं भृङ्गारम् १० आवर्षेद् आ—समन्तात् सिञ्चेत्। ११ 'पतणतणायंति' अनुकरणवचनमेतत्—प्रकर्षेण स्तनितं कुर्वन्तीत्यर्थः, १२ प्रकर्षेण विद्युतं विदधति।

8 "अब्भ्राणि सन्ति अस्मिन् इति "अभ्रादिभ्यः" [७-२-४६ हैमश०] इति मत्वर्थीयः 'अ' प्रत्ययः"—राय० विव०।

आभियोगिकाः पुष्पवृष्टिं कुर्वन्ति

दगं वासं वासंति वासेत्ता णिहयरयं णट्ठरयं भट्ठरयं उवसंतरयं पसंतरयं करेंति, करित्ता खिप्पामेव उवसामन्ति ।

[२३] तच्चं पि वेउव्वियसमुग्घाएणं समोहण्णन्ति पुप्फवद्दलए[1] विउव्वन्ति । से जहाणामए मालागारदारए सिया तरुणे जाव [कण्डिका २१ पं०५]-सिप्पोवगए [2]एगं महं ×पुप्फछज्जियं[3] वा पुप्फपडलगं[4] वा =पुप्फचङ्गेरियं वा गहाय रायङ्गणं वा जाव [कण्डिका २१ पं० ९] सव्वतो समंता [5]कयग्गहगहियकरयलप÷भट्ठविप्पमुक्केणं दसद्धवण्णेणं कुसुमेणं मुक्कपुप्फपुंजोवयारकलितं करेज्जा, एवामेव ते सूरियाभस्स देवस्स आभिओगिया देवा पुप्फवद्दलए विउव्वन्ति खिप्पामेव पतणतणायन्ति जाव जोयणपरिमण्डलं जलयथलयभासुरप्पभूयस्स [कण्डिका

[२३] १ पुष्पवृष्टियोग्यानि वार्दलकानि पुष्पवार्दलकानि-पुष्पवर्षुकान् मेघान् विकुर्वन्तीति भावः । २ एकां महतीं ३ छाद्यते-उपरि स्थग्यते इति छाद्या छाद्यैव छाद्यिका पुष्पैर्भृता छाद्यिका पुष्पछाद्यिका तां वा । ४ पटलकानि-प्रतीतानि । ५ इह मैथुनसंरम्भे यद् युवतेः केशेषु ग्रहणं स कचग्रहस्तेन गृहीतं कचग्रहगृहीतम् तथा करत÷लाद् विप्रमुक्तं सत् प्रभ्रष्टं करतलप्र*भ्रष्टवि-O प्रमुक्तम् तेन ।

× पा० ३ प्रतौ नैष शब्दः । पुप्फठज्जियं पुप्फात्थियं इत्यधिकः पाठः पा० २ । पुप्फपत्थियं-पुष्पप्रस्थिकाम् पुष्पपात्रिकाम् इत्यर्थः सभाव्यते । = पा० १ प्रतौ नैष पाठः । ÷ लाद् विमु-पा० ५-४ भा० १ । *-भ्रष्टविमु-पा० ५-४ भा० १ । O "प्राकृतत्वात् = पदव्यत्ययः ततो विशेषणसमासः"-राय० विव० ।

='भ्रष्ट'-'विप्रमुक्त'पदयोर्व्यत्ययः ।

१८ पं० १०] थिदट्ठाइस्स दसद्धवन्नकुसुमस्स जाणुस्सेहपमाणमेत्तिं +ओहिं वासन्ति वासित्ता कालागुरुपवरकुन्दुरुक्कतुरुक्कधूवमघमघन्तगन्धुद्धुयाभिरामं [कण्डिका १८ पं० ११] सुगंधवरगन्धियं गन्धवट्टिभूतं दिव्वं सुरवराभिगमणजोग्गं करेंति य कारवेंति य करेत्ता य कारवेत्ता य खिप्पामेव उवसामन्ति।

[२४] जेणेव समणे भगवं महावीरे तेणेव उवागच्छन्ति तेणेव उवागच्छित्ता समणं भगवं महावीरं तिक्खुत्तो जाव वन्दित्ता नमंसित्ता समणस्स भगवओ महावीरस्स अन्तियातो अम्बसालवणातो चेइयातो पडिनिक्खमन्ति पडिनिक्खमित्ता ताए उक्किट्ठाए [कण्डिका १९ पं० ९] जाव वीइवयमाणा वीइवयमाणा जेणेव सोहम्मे कप्पे जेणेव सूरियाभे विमाणे जेणेव सभा सुहम्मा जेणेव सूरियाभे देवे तेणेव उवागच्छन्ति सूरियाभं देवं करयलपरिग्गहियं सिरसावत्तं मत्थए अञ्जलिं कट्टु [1]जएणं विजएणं वद्धावेंति [2]वद्धावेत्ता [3]तमाणत्तियं [4]पच्चप्पिणन्ति।

[२४] शेषं सुगमं यावत् १ 'जएणं विजएणं वद्धावेंति'–जयेन विजयेन वर्धापयन्ति–जय त्वं देव! विजयस्व त्वं देव! इत्येवं वर्धापयन्ति–इत्यर्थः। तत्र जयः–परैरनभिभूयमानता प्रतापवृद्धिश्च विजयस्तु–परेषामसहमानानामभिभवोत्पादः, २ वर्द्धापयित्वा च ३ तां पूर्वोक्तामाज्ञप्तिकां ४ प्रत्यर्पयन्ति–आदिष्टकार्यसम्पादनेन निवेदयन्तीत्यर्थः।

+ विवरणकारेण 'ओहिं' शब्दस्य विवरणं 'ओघेन' इत्येवं कृतम् [पृ० ५४ पं० १२] तथापि 'ओहिं' इत्यस्य विवरणम् 'अवधिम्' इति समुचितं भाति।

सूर्याभस्य स्वपदात्यनीकाधिपतिं प्रति आदेशः

[२५] [1]तए णं [2]से सूरियाभे देवे तेसिं[3] आभियोगियाणं देवाणं अंतिए [4]एयमट्ठं सोच्चा निसम्म हट्ठतुट्ठ-जाव [कं० १३ पं० २]-हियए पायत्ताणियाहिवइं देवं सद्दावेति सद्दावेत्ता एवं वदासी-

'खिप्पामेव [10]भो! देवाणुप्पिया! सूरियाभे विमाणे सभाए सुहम्माए [12]मेघोघरसियगंभीरमहुरसद्दं जोयणप[13]रिमण्डलं =सूसरं[14] घंटं तिक्खुत्तो [15]उल्लालेमाणे उल्लालेमाणे [16]महया महया सद्देणं [17]उग्घोसेमाणे उग्घोसेमाणे एवं ×वयाहि-[19]'आणवेति णं [20]भो! सूरियाभे[21] देवे गच्छति[22] णं [23]भो! सूरियाभे[24] देवे जंबूद्दीवे[25] दीवे भारहे[26] वासे आमलक[27]-

[२५] १ततो 'णं' इति पूर्ववत् २स सूर्याभो देवः ३तेषाम् आ-समन्तादाभिमुख्येन युज्यन्ते-प्रेष्यकर्मसु व्यापार्यन्ते इत्याभियोग्याः-आभियोगिका इत्यर्थः तेषामाभियोग्यानां देवानाम् अन्तिके-समीपे ४ एनम्-अनन्तरोक्तमर्थं ५ श्रुत्वा श्रवणविषयं कृत्वा श्रवणानन्तरं च निशम्य-परिभाव्य ६ पदात्यनीकाधिपतिं देवं ७ शब्दयति, शब्दयित्वा ८ एवमवादीत्-९क्षिप्रमेव १०भो! देवानांप्रिय! ११सभायां सुधर्मायां-सुधर्माभिधानायाम् १२मेघानामोघः-संघातो मेघौघस्तस्य रसितं-गर्जितं तद्वद् गम्भीरो मधुरश्च शब्दो यस्याः सा मेघौघरसितगम्भीरमधुरशब्दा ताम् १३योजनं योजनप्रमाणं +परिमण्डलं पारिमाण्डल्यं यस्याः सा योजनपरिमण्डला ताम् १४सुस्वरां-सुस्वराभिधानां घण्टाम् १५उल्लालयन् उल्लालयन् ताडयन् ताडयन्नित्यर्थः, १६महता महता शब्देन १७उद्घोषयन्-उद्घोषणां कुर्वन् १८एवं४वद-१९'आज्ञापयति २०भोः! २१सूर्याभो देवः यथा २२गच्छति २३भोः! २४सूर्याभो देवो २५जम्बूद्वीपं २६भारतं वर्षं २७आ-

= सुस्सर पा० १। ×अयं पाठः भा० १ प्रतावेव लभ्यते तथापि अनेनैव च पाठेन मूलार्थसंगतिः। मुद्रित 'वयासी' इति पाठस्तु भूतकालसूचकः स चात्र न सगतिं गच्छति। अत्र तु आज्ञार्थसूचकस्यैव पाठस्योचितत्वम्। +"गुणप्रधानोऽय निर्देश." राय० वृ०। परिमण्डलम्-सर्वतः समन्तात् मण्डलाकारता-वृत्ताकारता। 8 वदति मु० पु०।

एयाए णयरीए अंबसालवणे चेतिते समणं[3] भगवं महावीरं ÷अभिवंदए,[3] तुब्भेऽवि णं भो ! देवाणुप्पिया ! *सव्विड्ढीएँ

मलकल्पां नगरीम् १आम्रशालवनं चैत्यं २श्रमणं भगवन्तं महावीरं ३वन्दितुम् तत् तस्मात् ४यूयमपि देवानांप्रियाः ! ५सर्वर्द्धया–परिवारादिकया सर्वद्युत्या यथाशक्तिविस्फारितेन समस्तेन शरीरतेजसा सर्वबलेन–समस्तेन हस्त्यादिसैन्येन सर्वसमुदायेन–स्वस्वाभियोग्यादिसमस्तपरिवारेण,सर्वादरेण–समस्तयावच्छक्ति○मूलेन सर्वविभूत्या–समस्तस्वाभ्यन्तरवैक्रियकरणादिबाह्यरत्नादिसम्पदा सर्वविभूषया यावच्छक्तिस्फारोदारशृङ्गारकरणेन 'सव्वसंभमेणं'ति सर्वोत्कृष्टेन संभ्रमेण–सर्वोत्कृष्टसम्भ्रमो नाम इह स्वनायकविषयबहुमानख्यापनपरा स्वनायकोपदिष्टकार्यसम्पादनाय यावच्छक्तित्वरितत्वरिता प्रवृत्तिः 'सव्वपुप्फवत्थगंधमल्लालंकारेणं' अत्र गन्धा वासाः माल्यानि–पुष्पदामानि अलङ्काराः–आभरणविशेषाः,= 'सव्वदिव्वतुडियसद्दसंनिनाएणं'इति सर्वाणि च तानि दिव्यतुडितानि च दिव्यतूर्याणि

–'अभिवंदए' इत्यस्य विवरणम् 'वन्दितुम्' इति कृत विवरणकारेण, अतः अभिवन्दए–अभिवन्दकः अत्र तुमर्थे 'णकच्' प्रत्ययो बोध्यः "क्रियायां क्रियार्थाया तुम् णकच् भविष्यन्ती" [५–३–१३ हैमश०] इति सूत्रं 'णकच्' प्रत्ययविधायकम् । *विवरणकारेण 'सव्विड्ढीए' पदं व्याख्याय 'सर्वद्युत्या' 'सर्वबलेन' 'सर्वसमुदायेन' 'सर्वादरेण' 'सर्वविभूत्या' 'सर्वविभूषया' 'सव्वसंभमेणं' 'सव्वपुप्फवत्थगंधमल्लालंकारेणं' 'सव्वदिव्वतुडियसद्दसंनिनाएण' 'महताए इड्ढीए' 'महताए जुईए' 'महता वरतुडितयमकसमकपटुपुरुषप्रवादितरवेण सङ्ख–पणव–पडह–भेरि–झल्लरि–खरमुहि–हुडुक्क–मुरज–मुइंग–दुदुभिनिग्घोसनाइतरवेण' एतान्यपि पदानि कानिचित् सप्रतीक व्याख्यातानि अतो ज्ञायते यत् विवरणकारप्राप्तमूलपाठे एतानि सर्वाण्यपि पदानि मूले एव अभूवन् । ○ –क्तितुलनेन–भा० २ । = "ततः समाहारो द्वन्द्व ततः सर्वशब्देन सह विशेषणसमासः" राय०विव० ।

रायपसेण-इयं।

जाव–नाइ[2]तरवेण णि[1]यगपरियालसद्धिं सं[3]परिवुडा साति साति जाणविमाणाइं दुरूढा समाणा अकालप[4]रिहीणं चेव सूरियाभस्स देवस्स अंतिएं[5] पाउब्भवह[6]’।

॥७०॥ सर्वदिव्यतुडितानि तेषां शब्दाः सर्वदिव्यतुडितशब्दाः तेषामेकत्र मीलनेन यः सङ्गतेन नितरां नादो–महान् घोषः =सर्वतुडितदिव्य-शब्दसन्निनादस्तेन। इह अल्पेष्वपि ‘सर्व’शब्दो दृष्टः यथा–‘अनेन सर्वं पीतं घृतम्’ इति तत आह–‘महताए इड्ढीए’ इत्यादि महत्या यावच्छक्तितुलितया ऋद्ध्या परिवारादिकया, एवं ‘महताए जुईए’ इत्याद्यपि भावनीयं, तथा महता–स्फूर्तिमता वराणां–प्रधानानां तुडितानाम्–आतोद्यानां यमकसमकम्–एककालं पटुभिः पुरुषैः प्रवादितानां यो रवस्तेन, एतदेव विशेषेणाचष्टे–१ ‘संख–पणव–पडह–भेरि–झल्लरि–खरमुहि–हुडुक्क–○मुरज–मुइंग–दुंदुभि–निग्घोसनाइतरवेण’ शङ्खः–प्रतीतः पणवो भाण्डानाम् पटहः प्रतीतः भेरी–ढक्का, झल्लरी–चर्मावनद्धा विस्तीर्णा वलयाकारा, खरमुही–काहला, हुडुक्का–प्रतीता, महाप्रमाणो मर्द्दलो मुरजः, स एव लघुर्मृदङ्गः दुन्दुभिः–भेर्याकारा सङ्कटमुखी8 तासां निर्घोषो–महान् ध्वानो नादितं च–घण्टायामिव वादनोत्तरकालभावी सततध्वनिः तल्लक्षणो यो रवस्तेन २ निजकः–आत्मीयः आत्मीयो यः परिवारस्तेन सार्द्धम्, ३ तत्र सहभावः परिवाररीतिमन्तरेणापि सम्भवति तत आह–‘संपरिवुडा’ सम्यक्–परिवाररीत्या परिवृताः सम्परिवृताः ४ परिहानिः–परिहीनं कालस्य परिहीनं कालविलम्ब इति भावः न विद्यते कालपरिहीनं यत्र प्रादुर्भवने तत् *अकालपरिहीनम्–५ अन्तिके–समीपे ६ प्रादुर्भवत समागच्छतेति भावः।

○–मुरवुमु–पा० ५। –मुरवमु–भा० २। –मुरवुमु–भा० १। 8 “एतेषां द्वन्द्वः”–राय० विव०। * “क्रियाविशेषणमेतत्”, राय०विव०।

[२६]तए णं से पायत्ताणियाहिवती देवे सूरियाभेणं देवेणं एवं वुत्ते समाणे हट्ठतुट्ठ जाव [कं०१३ पं० २]–हियए एवं देवो ! तहत्ति आणाए विणएणं वयणं पडिसुणेति [कं०१९ पं०२] पडिसुणित्ता जेणेव सूरियाभे विमाणे जेणेव सभा सुहम्मा जेणेव मेघोघरसियगम्भीरमहुरसद्दा जोयणपरिमण्डला सुस्सरा घंटा तेणेव उवागच्छति उवागच्छित्ता तं मेघोघरसितगम्भीरमहुरसद्दं जोयणपरिमंडलं सुसरं घंटं तिक्खुत्तो[1] उल्लालेति[2]। तए[3] णं तीसे[4] मेघोघरसितगंभीरमहुरसद्दाए[5] जोयणपरिमंडलाए[6] सुसराए घंटाए तिक्खुत्तो उल्लालियाए समाणीए से[12] सूरियाभे विमाणे पासाय[13]विमाणणिक्खुडावडियसद्दघंटापडिसुयासयसहस्ससंकुले[14] जाए[15] याऽवि[16] होत्था।

[२६] १ त्रिकृत्वः–त्रीन् वारान् २ उल्लालयति–ताडयति ३ ततः–४'णं' इति वाक्यालङ्कारे ४ तस्यां ५ मेघौघरसितगम्भीरमधुरशब्दायाम् ६ योजनपरिमण्डलायाम् ७ सुस्वराभिधानायाम् ८ घण्टायाम् ९ त्रिकृत्वः १० ताडितायाम् ११ सत्याम् १२ यत् सूर्याभं विमानं १३ तत्प्रासादनिष्कुटेषु च ये आपतिताः शब्दाः–शब्दवर्गणापुद्गलास्तेभ्यः समुच्छलितानि यानि घण्टाप्रतिश्रुतां शतसहस्राणि–घण्टाप्रतिशब्दलक्षाणि तैः–संकुलम् १५ अपि १४ जातम् १६ अभूत्–किमुक्तं भवति ?–घण्टायां महता प्रयत्नेन ताडितायां ये विनिर्गताः शब्दपुद्गलास्तत्प्रतिघातवशतः सर्वासु दिक्षु विदिक्षु च* दिव्यानुभावतः समुच्छलितैः प्रतिशब्दैः सकलमपि विमानमेकयोजनलक्षमानमपि बधिरितमुपजायत इति। एतेन 'द्वादशभ्यो योजनेभ्यः समागतः शब्दः श्रोत्रग्राह्यो भवति न परतः ततः कथमेकत्र ताडितायां घण्टायां सर्वत्र तच्छब्दश्रुतिरुपजायते ?' इति यच्चोद्यते तदपाकृतमवसेयम्, सर्वत्र दिव्यानुभावतः तथारू-

४ विवरणकारेण एतत् सूचनं बारवारं कृतम्, तच्च अस्माभिः सर्वत्र न न्यस्तम्। * च शब्दानु–पा० ५।

[१]तए णं तेसिं[२] सूरियाभविमाणवासिणं बहूणं वेमाणियाणं देवाण य देवीण य एगंतरइपसत्तनिच्चपमत्तविसयसुहमुच्छियाणं सुसर[३]घंटारवविउलबोलतुरियचवलपडिबोहणे कए समाणे [४]घोसणकोउहलदिन्नकन्नएगग्गचित्तउवउत्तमाणसाणं [५]से पायत्ताणीयाहिवई देवे तंसि घंटारवंसि णिसंतपसंतंसि

पमतिरूपप्रतिशब्दोच्छलने यथोक्तदोषासंभवात् ।

१ ततः २ तेषां सूर्याभविमानवासिनां बहूनां वैमानिकदेवानां देवीनां च एकान्तेन सर्वात्मना रतौ–रमणे प्रसक्ता एकान्तरतिप्रसक्ता अत एव नित्यं–सर्वकालं प्रमत्ता नित्यप्रमत्ताः, कस्मादिति चेत्? अत आह–विषयसुखेषु मूर्च्छिता–अध्युपपन्ना विषयसुखमूर्च्छिताः ततो नित्यप्रमत्ताः,⊖ तेषाम् ३ सुस्वराभिधानाया घण्टाया रवस्य यः सर्वासु दिक्षु विदिक्षु च प्रतिशब्दोच्छलनेन विपुलः–सकलविमानव्यापितया विस्तीर्णो बोलः–कोलाहलस्तेन त्वरितं–शीघ्रं चपलं–आकुलं प्रतिबोधने कृते सति ४ 'कीदृग् नाम घोषणं भविष्यति' इत्येवं घोषणे कुतूहलेन दत्तौ कर्णौ यैस्ते घोषणकुतूहलदत्तकर्णाः तथा एकाग्रं–घोषणाश्रवणैकविषयं चित्तं येषां ते एकाग्रचित्ताः एकाग्रचित्तत्वेऽपि कदाचिदनुपयोगः स्यात् अत आह–उपयुक्तमानसाः○ तेषाम् ५ पदात्यनीकाधिपतिर्देवः ६ तस्मिन् घण्टारवे नितरां शान्तो निशान्तः–अत्यन्तमन्दीभूतस्ततः प्रकर्षेण–सर्वात्मना शान्तः प्रशान्तः× तस्मिन्

⊖ "ततः पदत्रयस्य पदद्वयमीलनेन विशेषणसमास."–राय० वि०। ○ "ततः पूर्वपदेन विशेषणसमासः" राय० वि०। × "ततः

महया महया सद्देणं उग्घोसेमाणे उग्घोसेमाणे एवं वदासी–हंदं सुणंतु भवंतो सूरियाभविमाणवासिणो बहवे वेमाणिया देवा य देवीओ य सूरियाभविमाणवइणो वयणं हियसुहत्थं–'आणवेइ णं भो ! सूरियाभे[11] देवे, [12]गच्छइ णं भो ! सूरियाभे देवे [13]जंबूदीवं दीवं भारहं वासं आमलकप्पं नयरीं अंबसालवणं चेइयं समणं भगवं महावीरं अभिवंदए, तं तुब्भेऽवि णं देवाणुप्पिया ! सव्विड्ढीए अकालपरिहीणा चेव सूरियाभस्स देवस्स अन्तियं पाउब्भवह'।

१ महता महता शब्देन २ उद्घोषयन् ३ एवमवादीत्–४ ४'हन्त'इति हर्षे हर्षश्च स्वामिनाऽऽदिष्टत्वात् श्रीमन्महावीरपादवन्दनार्थं च= प्रस्थानसमारम्भात्, ५ शृण्वन्तु ६ भवन्तो बहवः सूर्याभविमानवासिनो वैमानिकदेवा देव्यश्च ७ सूर्याभविमानपतेः ८ वचनं हितसुखार्थं हितार्थं सुखार्थं चेत्यर्थः तत्र हितं जन्मान्तरेऽपि कल्याणावहम्–तथाविधकुशलम् सुखं तस्मिन् भवे निरुपद्रवता ९आज्ञापयति १० भोः ! देवानांप्रियाः ! ११ सूर्याभो देवो यथा १२ गच्छति भोः ! सूर्याभो देवो १३ 'जम्बूद्वीपं द्वीपम्' इत्यादि तदेव यावत् 'अन्तिके प्रादुर्भवत' । [पृ० ६८ पं० ५]

–'छिन्नप्ररूढः' इत्यादौ इव विशेषणसमास."–राय० विव० । ४ "उक्तं च "हन्त* हर्षेऽनुकम्पायाम्"इत्यादि "–राय० विव० । = च समारम्भात् पा० ५–४ । भा० १ ।

– पूर्वं छिन्नः पश्चात् प्ररूढ 'छिन्नप्ररूढ.' तद्वत् अत्र निशान्त–प्रशान्तपदयोः समासः । * "हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः"–अमरकोशः नानार्थव० तृ० का० श्लो० २४३ ।

[२७]तए[१] णं ते[२] सूरियाभविमाणवासिणो बहवे वेमाणिया देवा देवीओ य[३] पायत्ताणियाहिवइस्स[४] देवस्स अंतिए[५] एयमट्ठं[६] सोच्चा णिसम्म हट्ठतुट्ठ जाव [ कं० १३ पं० २ ]-हियया[७] अप्पे=गइया[८] वन्दणवत्तियाए[९] अप्पेगइया[१०] पूयणवत्तियाए अप्पेगइया[११] सक्कारवत्तियाए+ अप्पेगइया[१३] संमाणवत्तियाए[१४] अप्पेगइया[१५] [१६]कोऊहलजिणभत्तिरागेणं



[२७]१ ततः २ ते सूर्याभविमानवासिनो बहवो वैमानिका देवा देव्यश्च ३ पदात्यनीकाधिपतेर्देवस्य ४ समीपे ५ एनम्-अनन्तरोक्तमर्थं ६ श्रुत्वा ७ अपिः सम्भावनायाम् एककाः-केचन ८ वन्दनप्रत्ययम्-वन्दनम्-अभिवादनं प्रशस्तकायवाग्मनःप्रवृत्तिरूपं तत्प्रत्ययम्-तत् मया भगवतः श्री-मन्महावीरस्य कर्त्तव्यमित्येवंनिमित्तम्, ९ अप्येकका: १० पूजनप्रत्ययम्-पूजनं-गन्धमाल्यादिभिः समभ्यर्चनम् ११ अप्येककाः १२ सत्कारप्रत्ययम्-सत्कारः-स्तुत्यादिगुणोन्नतिकरणम् १३ अप्येककाः १४ सम्मानो-मानसः प्रीतिविशेषः, १५ अप्येककाः १६कु-तूहलजिनभक्तिरागेण-कुतूहलेन-कौतुकेन 'कीदृशो भगवान् सर्वज्ञः सर्वदर्शी श्रीमन्महा-

= अपि+एकका:-अप्येकका:-अप्पेगइआ। + -ए एवं संमाण-वि० बा०। ~ -मन्महावीरेण इत्येवं रूपेण यो जिने भगवति-भा० २। ~ लिखितप्रतिगते मूलसूत्रपाठे 'कोऊहलवत्तियाए'......'जिणभत्तिरागेण' इत्येवंरूपेण सुव्यवहितः पृथक् पृथक् निर्देशो लभ्यते। विवरणकारस्तु 'कुतूहलजिनभक्तिरागेण' इत्येवं समस्तमिव एकं पदं व्याख्याति, ततः विवरणकारप्राप्तपाठः प्रतिगतमूलपाठाद् भिन्नः प्रतिभाति। अत्र च विवरणानुसारी पाठक्रमो न्यस्तः।

अप्पेगईया सूरियाभस्स देवस्स वयण≈मणुयत्तेमाणा अप्पेगईया अस्सुयाइं सुणेस्सामो अप्पेगईया सुयाइं निस्संकियाइं करिस्सामो [पृ०४० पं० ४] अप्पेगतिया अन्नमन्नमणुयत्तमाणा अप्पेगइया जिणभत्तिरागेणं अप्पेगइया 'धम्मो'त्ति अप्पेगईया 'जीयमेयं'ति कट्टु संन्विड्ढीए [पृ० ६९ पं० १] जाव अकालपरिहीणा चेव सूरियाभस्स देवस्स अन्तियं पाउब्भवन्ति।

[२८]तए० णं से सूरियाभे देवे ते सूरियाभविमाणवासिणो बहवे वेमाणिया देवा य देवीओ य अकालपरिहीणा चेव अन्तियं पाउब्भवमाणे पासति पासित्ता हट्ठतुट्ठ [कं० १३ पं०२] जाव-हियए आभिओगियं देवं सद्दावेति

सूर्याभः आभियोगिकं विमानं रचयितुमादिशति



वीरः' इत्येवंरूपेण =यो जिने-भगवति वर्द्धमानस्वामिनि भक्ति8रागो-भक्तिपूर्वकोऽनुरागस्तेन १ अप्येके २ सूर्याभस्य देवस्य ३ वचनम्-आज्ञामनुवर्त्तमानाः ४ अप्येकका: ५ 'अश्रुतानि-पूर्वमनाकर्णितानि स्वर्गमोक्षप्रसाधनकानि वचांसि श्रोष्यामः' इति बुद्ध्या ६ अप्येकका: ७'श्रुतानि-पूर्वमाकर्णितानि यानि शङ्कितानि जातानि तानि इदानीं निःशङ्कितानि करिष्यामः' इति बुद्ध्या ८अप्येकका: ९ जीतमेतत्-कल्प एष इति कृत्वा। १० 'सन्निड्ढीए' इत्यादि प्राग्वत् [पृ० ६९ पं० ३]

≈ -मणुमन्नेमाणा-भा० १-२। ० ततः स सूर्याभो देवः तान् सूर्याभविमानवासिनः बहून् वैमानिकान् देवांश्च देवीश्च अकालपरिहीनान् चैव अन्तिकं प्रादुर्भवमानान् पश्यति दृष्ट्वा हृष्टतुष्ट-यावद्-हृदयः आभियोगिकं देवं शब्दापयति शब्दापयित्वा एवम् अवादीत्-क्षिप्रमेव भो! देवानुप्रिया:! = यो जने-पा० ५। यो भग-भा० १। यो जने 'भगवान्' रूपेण यो जने 'भगवान्' इति 'वर्धमानस्वामी' इनि भक्तिरा-पा० ४। 8 रागेण भक्ति-भा० १।

सद्दाविता एवं वयासी–खिप्पामेव भो! देवाणुप्पिया! अणेग[1]खम्भसयसंनिविट्ठं [2]लीलट्ठियसालभंजियागं [3]ईहामियउसभतुरगनरमगरविहगवालगकिंनररुरुसरभचमरकुञ्जरवणलयपउमलयभत्तिचित्तं [4]खंभुग्गय*वइरवेइयापरिगयाभिरामं [5]विज्जाहरजमलजुय⊖लजंतजुत्तं पिव [6]अच्चीसहस्समालणीयं [7]रूवगसहस्सकलियं [8]भिसमाणं [9]भिब्भिसमाणं [10]चक्खुल्लोयणलेसं [11]सुहफासं [12]सस्सिरीयरूवं [13]घण्टावलिचलियमहुरमणहरसरं

[२८]१अनेकेषु स्तम्भशतेषु सन्निविष्टं, २लीलया स्थिता लीलास्थिताः, अनेन तासां पुत्तलिकानां सौभाग्यमावेदयति, लीलास्थिताः शालभञ्जिकाः–पुत्तलिका यत्र तत् तथा ३ ईहामृगा–वृका व्यालाः–श्वापदभुजङ्गा ईहामृगऋषभतुरगनरमकरविहगव्यालकिन्नररुरुसरभचमरकुञ्जरवनलतापद्मलतानां भक्त्या–विच्छित्त्या चित्रम्–आलेखो यत्र तत् तथा ४ तथा स्तम्भोद्गतया–स्तम्भोपरिवर्त्तिन्या वज्ररत्नमय्या वेदिकया परिगतं सत् यदभिरामं तत् स्तम्भोद्गतवज्रवेदिकापरिगताभिरामम् ५ विद्याधरयोर्यद् यमलयुगलं–समश्रेणीकं द्वन्द्वं विद्याधरयमलयुगलं तच्च तद् यन्त्रं च–सञ्चरिष्णुपुरुषप्रतिमाद्वयरूपं तेन युक्तं तदिव ६ तथा अर्चिषां–किरणानां सहस्रैर्मालनीयं–परिवारणीयं○ अर्चिःसहस्रमालनीयम् तथा ७ रूपकसहस्रकलितं ८ दीप्यमानं ९ अतिशयेन देदीप्यमानं, १० चक्षुः–कर्तृ–लोकने लिसतीव–दर्शनीयत्वातिशयात् श्लिष्यतीव यत्र तत् तथा, ११ शुभः–कोमलः स्पर्शो यस्य तत् तथा १२ सश्रीकानि–सशोभकानि रूपाणि–रूपकाणि यत्र तत् सश्रीकरूपं १३ घण्टावलेः–घण्टापङ्क्तेर्वातवशेन ⊖चलितायाः–कम्पितायाः मधुरः–श्रोत्रप्रियो मनोहरो–मनो-

* –यत्ररवइ–भा० १। ⊖ –यल जंत–भा० २। ○ –यं अर्चिसहस्रकलितं दी–पा० ५–४। भा० १। ⊖ "चलितशब्दस्य विशेष्यात् परनिपातः प्राकृतत्वात्"–राय० विव०।

सुहं[1] कंतं[2] दरिसणिज्जं[3] णिउणओचिय[4]मिसिमिसिंत[5]मणिरयणघंटियाजालपरिक्खित्तं[6] जोयणसयसहस्सवित्थिण्णं[7] दिव्वं[8] गमणसज्जं सिग्घगमणं[9] णाम जाणविमाणं[10] वि○उव्वाहि, विउव्वित्ता खिप्पामेव एयमाणत्तियं पच्च=प्पिणाहि।

[२९] तए णं से आभिओगिए देवे सूरियाभेणं देवेणं एवं वुत्ते समाणे हट्ठे जाव–हियए करयलपरिग्गहियं जाव पडिसुणेइ जाव पडिसुणेत्ता उत्तरपुरत्थिमं दिसीभागं अवक्कमति [कं० १९ पं० ३] अवक्कमित्ता वेउव्वियसमुग्घाएणं समोहणइ समोहणित्ता संखेज्जाइं जोयणाइं जाव अहाबायरे पोग्गले परिसाडंति परिसाडित्ता अहासुहुमे पोग्गले परियाएइ परियाइत्ता दोच्चं पि वेउव्वियसमुग्घाएणं समोहणित्ता अणेगखम्भसयसन्निविट्ठं [पृ० ७६ पं० १] जाव दिव्वं जाणविमाणं ○विउव्विउं पवत्ते यावि होत्था।

निर्वृतिकरः स्वरो यत्र तत् तथा १ शुभं यथोदितवास्तुलक्षणोपेतत्वात् २ कान्तं कमनीयं, अत एव ३ दर्शनीयं, तथा ४ निपुणक्रियम्–५ उचितानि–खचितानि ६ देदीप्यमानानि मणिरत्नानि यत्र घण्टिकाजाले तत् तथा तेन घण्टिकाजालेन–क्षुद्रघण्टिकासमूहेन परि–सामस्त्येन क्षिप्तं–व्याप्तं यत् तत् तथा ७ योजनशतसहस्रविस्तीर्णं–योजनलक्षविस्तारं ८ दिव्यं प्रधानं गमनसज्जं गमनप्रवणं ९ शीघ्रगमननामधेयं १० यानरूपं–वाहनरूपं विमानं यानविमानम्। शेषं प्राग्वत्।

○ –उव्वह भा० २। = –प्पिणह भा० २।

[२९] ○ विकुर्वितु प्रवृत्तश्चापि अभूत्।

रायपसेणइयं।

॥७८॥

विमानरचना वर्णनम्

[३०] तए णं से आभिओगिए देवे [१]तस्स दिव्वस्स जाणविमाणस्स [२]तिदिसिं ४तिसो[३]वाणपडिरूवए विउव्वति, तंजहा–पुरत्थिमेणं दाहिणेणं उत्तरेणं, तेसिं[४] तिसोवाणपडिरूवगाणं [५]इमे एयारूवे व[६]ण्णावासे पण्णत्ते, [७]तंजहा– [८]वइरामया [९]णिम्मा [१०]रिट्ठामया [११]पतिट्ठाणा [१२]वेरुलियामया [१३]खंभा [१४]सुवण्णरुप्पमया [१५]फलगा [१६]लोहितक्खमइयाओ [१७]सूईओ [१८]वयरामया [१९]संधी [२०]णाणामणिमया [२१]अवलंबणा [२२]अवलंबणबाहाओ य [२३]पासादीया [ पृ० १८ पं० १ ] जाव

[३०] १तस्य दिव्यस्य यानविमानस्य २तिस्रो दिशः समाहृतास्त्रिदिक् तस्मिन् त्रिदिशि ३त्रीणि एकैकस्यां दिशि एकैकस्य भावात् त्रिसोपानप्रतिरूपकाणि प्रतिविशिष्टं रूपं येषां तानि प्रतिरूपकाणि त्रयाणां सोपानानां समाहारस्त्रिसोपानं त्रिसोपानानि च तानि प्रतिरूपकाणि *च ४ तेषां च त्रिसोपानप्रतिरूपकाणाम् ५ अयमेतद्रूपो–वक्ष्यमाणस्वरूपो ६ वर्णावासो वर्णकनिवेशः प्रज्ञप्तः, ७ तद्यथा–८ वज्रमया वज्ररत्नमया ९ नेमाः–भूमिकातः ऊर्ध्वं निर्गच्छन्तः प्रदेशाः, १० रिष्टरत्नमयानि ११ प्रतिष्ठानानि त्रिसोपानमूलप्रदेशाः, १२ वैडूर्यमयाः १३ स्तम्भाः, १४ सुवर्णरूप्यमयानि १५ फलकानि–त्रिसोपानाङ्गभूतानि, १६ लोहिताक्षमय्यः १७ सूचयः–फलकद्वयसम्बन्धविघटनाभावहेतु○पादुकास्थानीयाः, १८ वज्रमया वज्ररत्नपूरिताः १९ सन्धयः फलकद्वयापान्तरालप्रदेशाः, २० नानामणिमयानि २१ अवलम्ब्यन्ते इति अवलम्बनानि–अवतरतामुत्तरतां चालम्बनहेतुभूता अवलम्बनबाहातो विनिर्गताः केचिदवयवाः, २२ अवलम्बनबाहाश्च नानामणिमय्यः, आलम्बनबाहा नाम उभयोः पार्श्वयोरवलम्बनाश्रयभूता भित्तयः २३ 'पासाइयाओ'इत्यादि

४ तिसोमाण–भा० १। * "इति विशेषणसमासः विशेषणस्यात्र परनिपात' प्राकृतत्वात्"–राय० वि०। ○ –पादका–मा० १–२। पा० ४–५।

पडिरूवा ।

[३१]तेसिं [1] णं तिसोवाणपडिरूवगाणं [2] पुरओ [3] पत्तेयं [4] पत्तेयं तोरणं [5] पण्णत्तं [6], तेसिं [7] णं तोरणाणं इमे एयारूवे वण्णावासे पण्णत्ते, [10] तंजहा– [11] तोरणा णाणामणिमया [12] णाणामणिमएसु [13] थंभेसु [14] उवनिविट्ठसंनिविट्ठा [15] [16] विविहमुत्तन्तरारूवोवचिया [17] [18] विविहतारारूवोवचिया [पृ० ७६ पं० २] जाव [19] पडिरूवा ।

पदचतुष्टयं प्राग्वत् ।

[३१]१ तेषां २ त्रिसोपानप्रतिरूपकाणां ३ पुरतः ४ प्रत्येकं प्रत्येकं ५ तोरणं ६ प्रज्ञप्तं, ७ तेषां च तोरणानाम् ८ अयमेतद्रूपो ९ वर्णव्यासो–वर्णकनिवेशः प्रज्ञप्तः, १० तद्यथा–११ तोरणा १२ नानामणिमया इत्यादि, क्वचिदेवं पाठः–'तेसि णं तिसोवाणपडिरूवगाणं पुरतो तोरणे विउव्वइ तोरणा नाणामणि=मया'इत्यादि । मणयः–चन्द्रकान्ताद्याः, विविधमणिमयानि तोरणानि १३ नानामणिमयेषु १४ स्तम्भेषु १५ उपनिविष्टानि–सामीप्येन स्थितानि, १६ तानि च कदाचिच्चलानि अथवा अपदपतितानि वाऽऽशङ्क्येरन् तत आह–सम्यक्–निश्चलतया अपदपरिहारेण च निविष्टानि, उपनिविष्टसन्निविष्टानि, १७ विविधा–विविधविच्छित्तिकलिता मुक्ता–मुक्ताफलानि 'अन्तरा' इति अन्तराशब्दोऽगृहीतवीप्सोऽपि सामर्थ्याद् वीप्सां गमयति, अन्तरा अन्तरा रूपोपचितानि यावता यत्र तानि तथा, १८ विविधैस्तारारूपैः–तारिकारूपैरुपचितानि, तोरणेषु हि शोभार्थं तारिका निबध्यन्ते इति प्रतीतं लोकेऽपि इति विविधतारारूपोपचितानि १९ 'जाव पडिरूवा'इति 'यावत्'करणात् 'ईहामिगउसभतुरगनरमगरविहगवालगकिंनररुरुसरभचमरकुञ्जरवणलयपउम-

= विवरणकारदर्शितं पाठान्तरम् । ✓ "ततो विशेषणसमासः"–राय० विव० ।

रायपसेणइय।

[३२] तेसि णं तोरणाणं उप्पिं अट्ठट्ठमङ्गलगा पण्णत्ता, तंजहा–सोत्थिय–सिरिवच्छ–णन्दियावत्त–वद्धमाणग–भद्दासण–कलस–मच्छ–दप्पणा जाव [पृ० १९ पं० ४–पृ० २० पं० १] पडिरूवा। तेसिं च णं तोरणाणं [3]उप्पिं [4]बहवे किण्हचामरज्झया [पृ० २० पं० २] जाव सुक्किल्लचामरज्झया [5]अच्छा [6]सण्हा [7]रुप्पपट्टा [8]वइरदण्डा [9]जलयामलगन्धिया [10]सुरम्मा पासादीया दरिसणिज्जा अभिरूवा पडिरूवा विउव्वति।

॥८०॥

लयभत्तिचित्ता खम्भुग्गयवइरवेइयापरिगयाभिरामा विज्जाहरजमलजुगलजंतजुत्ता विव' एवं नाम स्तम्भद्वयसन्निविष्टानि तोरणानि व्यवस्थितानि यथ' विद्याधरयमलयुगलयन्त्रयुक्तानीव प्रतिभासन्ते इति, 'अच्चीसहस्समालणीया रूवगसहस्सकलिया भिसमाणा भिब्भिसमाणा चक्खुल्लोयणलेसा सुहफासा सस्सिरीयरूवा [पृ० ७६ पं०१–४] पासाइया दरिसणिज्जा अभिरूवा' इति परिग्रहः, क्वचिदेतत् साक्षाल्लिखितमपि दृश्यते=।

[३२] १ तेषां तोरणानाम् २ उपरि ३ बहवः कृष्णचामरयुक्ता ध्वजाः कृष्णचामरध्वजाः[पृ० २० पं० ९] एवं बहवो नीलचामरध्वजाः, लोहितचामरध्वजाः, हारिद्रचामरध्वजाः, ४शुक्लचामरध्वजाः, कथम्भूता एते सर्वेऽपि? इत्यत आह–५अच्छा–आकाशस्फटिकवदतिनिर्मलाः ६श्लक्ष्णाः–श्लक्ष्णपुद्गलस्कन्धनिर्मापिताः ७ रूप्यो–रूप्यमयो वज्रमयस्य दण्डस्योपरि पट्टो येषां ते रूप्यपट्टाः ८वज्रो–वज्ररत्नमयो दण्डो रूप्यपट्टमध्यवर्त्ती येषां ते वज्रदण्डाः, ९ तथा जलजानामिव–जलजकुसुमानां पद्मादीनामिवामलो न तु कुद्रव्यगन्धसम्मिश्रो यो गन्धः स जलजामलगन्धः स विद्यते येषां ते जलजामलगन्धिकाः, अत एव १०सुरम्याः प्रासादीयाः–इत्यादि-

= विवरणकारदर्शितः पाठभेदः।

तेसिं[11] णं तोरणाणं उप्पिं बहवे[12] [पृ०२१ पं०१] छत्तातिछत्ते[13] पडागाइपडागे[14] घंटाजुगले[15] उप्पलहत्थए[16] कुमुद-णलिण[17]-सुभग-सोगंधिय-पोंडरीय-महापोंडरीय-सतपत्त सहस्सपत्तहत्थए सव्वरयणामए[18] अच्छे जाव[19] पडिरूवे विउव्वति।

[३३] तए णं से आभिओगिए देवे तस्स[1] दिव्वस्स जाणविमाणस्स अंतो[2] बहुसमरमणिज्जं[3] भूमिभागं विउव्वति। से[4] जहा[5] णामए[6][7] आलिंगपुक्खरे[8] ति[9]

विशेषणचतुष्टयं प्राग्वत् । [पृ०११ पं०१२–] ११तेषां तोरणानामुपरि १२बहूनि [पृ० २१ पं०१–८] १३छत्रातिच्छत्राणि–छत्रात्–लोकप्रसिद्धात् एकसंख्याकात् अतिशायीनि छत्राणि उपर्यधोभावेन द्विसंख्यानि त्रिसंख्यानि वा छत्रातिच्छत्राणि १४पताकाभ्यो लोकप्रसिद्धाभ्योऽतिशायिन्यो दीर्घत्वेन विस्तारेण च पताकाः, १५बहूनि घण्टायुगलानि, बहूनि चामरयुगलानि, १६बहव उत्पलहस्ताः–उत्पलाख्यजलजकुसुमसमूहविशेषाः, एव बहवः १७पद्महस्तकाः नलिनहस्तकाः सुभगहस्तकाः सौगन्धिकहस्तकाः पुण्डरीकहस्तकाः शतपत्रहस्तकाः सहस्रपत्रहस्तकाः, पद्मादिविभागव्याख्यानं प्राग्वत् [पृ०२१ पं० १०] एते च छत्रातिच्छत्रादयः १८सर्वरत्नमया अच्छा–आकाशस्फटिकवदतिनिर्मला १९'यावत्'करणात् 'सण्हा लण्हा अभिरूवा' [पृ० १९ पं० ५–पृ० २० पं० ?] इति परिग्रहः ।

[३३] १तस्य दिव्यस्य यानविमानस्य २अन्तः–मध्ये ३बहुसमः सन् रमणीयो बहुसम?रमणीयो भूमिभागः प्रज्ञप्तः, किंविशिष्टः ? इत्याह–४तत्–सकललोकप्रसिद्धं ५'यथा' इति दृष्टान्तोपदर्शने ६'नाम' इति शिष्यामन्त्रणे ७'ए' इति वाक्यालङ्कारे ८आलिङ्गो–मुरजनामा वाद्यविशेषः तस्य पुष्करं–+चर्मपुलकं तत् किलात्यन्तसममिति तेनोपमा क्रियते ९ 'इति' शब्दाः सर्वेऽपि स्वस्वोपमाभूतवस्तु-

+ चर्मपुटम् तत् भा० २ ।

वा मुइंग[11]पुक्खरे इ वा परिपुण्णे[12] सरतले इ वा करतले[13] इ वा चंदमंडले[14] इ वा सूरमण्डले इ वा आयंसमंडले इ वा उरब्भचम्मे[16] इ वा वसहचम्मे इ वा वराहचम्मे इ वा सीहचम्मे इ वा वग्घचम्मे इ ×वा छगलचम्मे इ वा दीवियचम्मे[18] इ वा अणेगसंकुकीलगसहस्सवितते[19] णाणाविहपंचवन्नेहिं मणीहिं उवसोभिते आवड[21]-पच्चावड[22]-सेढि[23]-पसेढि-

परिसमाप्तिद्योतकाः १०'वा'शब्दाः समुच्चये ११मृदङ्गो लोकप्रतीतो मर्दलस्तस्य पुष्करं मृदङ्गपुष्करं १२ परिपूर्ण-पानीयेन भृतं तडाकं सरस्तस्य तलम्-उपरितनो भागः सरस्तलं, १३करतलं प्रतीतं, १४चन्द्रमण्डलं सूर्यमण्डलं च यद्यपि तत्त्ववृत्त्या उत्तानीकृतार्द्धकपित्थाकारं पीठप्रासादापेक्षया वृत्तालेखमिति तद्गतो दृश्यमानो भागो न समतलस्तथापि प्रतिभासते समतल इति तदुपादानं १५ आदर्शमण्डलं सुप्रसिद्धं १६ 'उरब्भचम्मे इ वा' इत्यादि, अत्र सर्वत्रापि 'अणेगसंकुकीलगसहस्सवितते' इति विशेषणयोगः, उरभ्रः-ऊरणः १७ वृषभ-वराह-सिंह-व्याघ्र-छगलाः प्रतीताः १८ द्वीपी-चित्रकः एतेषां प्रत्येकं चर्म १९ अनेकैः शङ्कुप्रमाणैः कीलकसहस्रैः, महद्भिर्हि कीलकैस्ताडितं प्रायो मध्ये क्षामं भवति तथारूपताडासम्भवात् अतः शङ्कुग्रहणं, विततं विततीकृतं ताडितमिति भावः, यथाऽत्यन्तं बहुसमं भवति तथा तस्यापि यानविमानस्यान्तर्बहुसमो भूमिभागः । पुनः कथम्भूतः? इत्याह-२० नानाविधाः-जातिभेदान्नानाप्रकारा ये पञ्चवर्णा मणयस्तैरुपशोभितः, कथम्भूतैः? इत्याह-आवर्त्तादीनि मणीनां लक्षणानि-२१ तत्र आवर्त्तः प्रतीतः २२ एकस्यावर्त्तस्य प्रत्यभिमुख आवर्त्तः प्रत्यावर्त्तः २३ श्रेणिः-तथाविधविन्दुजातादेः पङ्क्तिः २४ तस्याश्च श्रेणेर्या च निर्गता अन्या श्रेणिः

× वा भिगचम्मे इ वा छ-वि० वा० ।

[25]सोत्थिय–[26]सोवत्थिय-पूस-माणव–[27]वद्धमाणग-[28]मच्छंडग–मगरंडग–[29]जार–मार–[30]फुल्लावलि–[31]पउमपत्त–[32]सागरतरंग–[33]वसंतलय–पउमलयभत्तिचित्तेहिं[34] सच्छाएहिं[35] सप्पभेहिं[36] समरीईएहिं[37] सउज्जोएहिं[38] णाणाविहपंचवण्णेहिं[39] मणीहिं उवसोभिए तंजहा[40]–किण्हेहिं णीलेहिं लोहिएहिं हालिद्देहिं सुक्किलेहिं।

[३४] तत्थ[1] णं जे[2] ते किण्हा मणी तेसिं[3] णं मणीणं इमे[4] एतारूवे वण्णावासे[5] पण्णत्ते, से[6] जहा नाम ए जीमूतए



सा प्रश्रेणिः २५स्वस्तिकः प्रतीतः २६सौवस्तिक–पुष्यमाणवौ लक्षणविशेषौ लोकात् प्रत्येतव्यौ २७वर्द्धमानकं–शरावसम्पुटं २८मत्स्यकाण्डक–मकरकाण्डके प्रतीते २९जार–मार इति लक्षणविशेषौ सम्यग्मणिलक्षणवेदिनो लोकाद्वेदितव्यौ ३०पुष्पावलि-३१पद्मपत्र-३२सागरतरङ्ग–३३वासन्तीलता-पद्मलताः सुप्रतीता तासां ३४भक्त्या–विच्छित्त्या चित्रम्–आलेखो येषु ते आवर्त्तप्रत्यावर्त्तश्रेणिप्रश्रेणिस्वस्तिकसौवस्तिकपुष्यमाणववर्द्धमानकमत्स्याण्डकमकराण्डकजारमारपुष्पावलिपद्मपत्रसागरतरङ्गवासन्तीलतापद्मलताभक्तिचित्रास्तैः, किमुक्तं भवति ?–आवर्त्तादिलक्षणोपेतैः तथा ३५सच्छायैः सती–शोभना छाया–निर्मलत्वरूपा येषां ते सच्छायाः, तथा ३६सती–शोभना प्रभा–कान्तिर्येषां ते सत्प्रभाः तैः ३७समरीचिकैः–बहिर्विनिर्गतकिरणजालसहितैः ३८सोद्योतैः–बहिर्व्यवस्थितप्रत्यासन्नवस्तुस्तोमप्रकाशकरोद्योतसहितैः ३९एवम्भूतैर्नानाजातीयैः पञ्चवर्णैर्मणिभिरुपशोभितः, तानेव पञ्चवर्णानाह–४०'तंजहा–किण्हेहिं' इत्यादि सुगमम्।

[३४] १ तत्र तेषां पञ्चवर्णानां मणीनां मध्ये २ ×ये ते कृष्णा मणयः, ३तेषां ४ अयम्–अनन्तरमुद्दिश्यमान एतद्रूपः–अनन्तरमेव वक्ष्यमाणस्वरूपो ५वर्णावासो–वर्णकनिवेशः प्रज्ञप्तः, तद्यथा–६ स यथा नाम ७ जीमूतो–बलाहकः, स चेह प्रावृट्प्रारम्भसमये जलभृतो

× " 'ये कृष्णमणयः' इत्येव सिद्धे 'ते' इति वचनं भाषाक्रमार्थम्"–राय० विव०।

ई वा अंजणे[10] इ वा खंजणे[11] इ वा कज्जले[12] इ वा मसी[13] इ वा मसीगुलिया[14] इ वा गवले[15] इ वा गवलगुलिया[16] इ वा भमरे[17] इ वा भमरावलिया[18] इ वा भमरपतंगसारे[19] ति वा जंबूफले[20] ति वा अद्दारिट्ठे[21] इ वा परपुट्ठे[22] इ वा गए[23] इ वा गयकलभे[24] इ वा किण्हसप्पे[25] इ वा किण्हकेसरे[26] इ वा आगासथिग्गले[27] इ वा किण्हासोए[28] इ वा किण्हकणवीरे[29] इ वा किण्हबंधुजीवे[30]

---

वेदितव्यः तस्यैव प्रायोऽतिकालिमसम्भवात्, ८ 'इति' शब्दः उपमाभूतवस्तुनामपरिसमाप्तिद्योतकः ९ 'वा'शब्दः उपमानान्तरापेक्षया समुच्चये एवं सर्वत्र १०अञ्जनं–सौवीराञ्जनम् रत्नविशेषो वा ११खञ्जनं–दीपमल्लिकामलः, १२कज्जलं–दीपशिखापतितं, १३मषी–तदेव कज्जलं ताम्रभाजनादिषु सामग्रीविशेषेण घोलितम् १४मसीगुलिका–घोलितकज्जलगुटिका, क्वचित् 8'मसी इति वा मसीगुलिया इति वा' न दृश्यते १५गवलं माहिषं शृङ्गं तदपि चोपरितनत्वग्भागापसारेण द्रष्टव्यं तत्रैव विशिष्टस्य कालिम्नः सम्भवात् १६तथा च तस्यैव माहिषशृङ्गनिबिडतरसारनिर्वर्तिता गुटिका गवलगुटिका १७ भ्रमरः–प्रतीतः १८ भ्रमरावली–भ्रमरपङ्क्तिः १९ भ्रमरपतङ्गसारः–भ्रमरपक्षान्तर्गतो विशिष्टकालिमोपचितप्रदेशः २० जम्बूफलं प्रतीतं २१आर्द्रा–ऽरिष्टकः–कोमलः काकः २२ परपुष्टः–कोकिलः २३गजो २४ गजकलभश्च प्रतीतः २५कृष्णसर्पः कृष्णवर्णसर्पजातिविशेषः २६ कृष्णकेसरः–कृष्णबकुलः २७ आकाशथिग्गलं शरदि मेघविनिर्मुक्तमाकाशखण्डं तद्धि कृष्णमतीव प्रतिभातीति तदुपादानं २८कृष्णाशोक–२९ कृष्णकणवीर–३०कृष्णबन्धुजीवाः अशोक–कणवीर–बन्धुजीववृक्षभेदाः अशोकादयो हि पञ्चवर्णा भवन्ति ततः शेषवर्णव्युदासार्थं कृष्णग्रहणम्। एतावत्युक्ते त्वरावानिव शिष्यः पृच्छति–

---

8 विवरणकारदर्शित पाठान्तरम्। –भाषायाम् 'कूणुं–लीलु अरीठुं'। "अरिष्टो लशुने निम्बे फेनिले कङ्क–काकयोः" [हैमअने० तृ० का० श्लो० १४२] इति वचनात् अत्र 'काकः' इति निर्देशः संभाव्यते ।

इ वा, [३१]भवे [३२]एयारूवे सिया ? [३३]णो इणट्ठे समट्ठे, [३४]ओवम्मं [३५]समणाउसो ! [३६]ते णं किण्हा मणी इत्तो [३८]इट्ठतराए चेव [३९]कंततराए चेव [४०]मणुण्णंतराए चेव [४१]मणामतराए चेव वण्णेणं पण्णत्ता ।

३१भवेत् मणीनां कृष्णो वर्णः ३२एतद्रूपो जीमूतादिरूपः ? सूरिराह–३३नायमर्थः समर्थः नायमर्थ उपपन्नः यदुत–एवम्भूतः कृष्णो वर्णो मणीनामिति, यद्येवं तर्हि किमर्थं जीमूतादीनां दृष्टान्तत्वेनोपादानम्? अत आह–३४औपम्यम्–उपमामात्रमेतत् उदितं हे ३५ श्रमण–आयुष्मन् ! ३६यावता पुनस्ते कृष्णा मणयः ३७ इतो जीमूतादेः ३८ इष्टतरका एव कृष्णेन वर्णेन अभीप्सिततरका एव, ३९ तत्र किञ्चिदकान्तमपि केषाञ्चिदिष्टतमं भवति ततोऽकान्तताव्यवच्छित्त्यर्थमाह–कान्ततरका एव अतिस्निग्धमनोहारिकालिमोपचिततया जीमूतादेः कमनीयतरकाः ४० अत एव मनोज्ञतरका एव–मनसा ज्ञायते–अनुकूलतया स्वप्रवृत्तिविषयीक्रियते इति *मनोज्ञं मनोऽनुकूलं ४१ तत्र मनोज्ञतरमपि किञ्चिद् मध्यमं भवेत् ततः सर्वोत्कर्षप्रतिपादनार्थमाह–+मनआपतरका एव द्रष्टॄणां मनांसि आप्नुवन्ति–आत्मवशतां नयन्तीति मनआपाः–।

* "ततः प्रकर्षविवक्षायां 'तरप्' प्रत्ययः"–राय० वि०। + नवाङ्गीवृत्तिकारः श्रीअभयदेवसूरिः व्याख्याप्रज्ञप्तिवृत्तौ 'मणाम'शब्द संस्कृत–'मनोऽम' (मनस्+अम्–'अम्' धातुः 'गम्' धातो: पर्याय) शब्देन सह तुलयति, "अमनोऽम्यतया चिन्तयाऽपि अमनोगम्यतया"—श० १ उ० १ राय०जिना० भा० १ पृ० ६२ । – "ततः प्रकर्षविवक्षायां 'तरप्'प्रत्ययः प्राकृतत्वाच्च 'प'कारस्य 'म'कारे 'मणामतरा' इति भवति"—राय० वि० ।

रायपसेण-इयं।

॥८६॥

[३५] तत्थ णं जे[2] ते नीला मणी तेसिं[3] णं मणीणं [4]इमे एयारूवे [5]वण्णावासे पण्णत्ते, से[6] जहा नाम ए [7]भिंगे इ वा [8]भिंगपत्ते इ वा [9]सुए इ वा [10]सुयपिच्छे इ वा [11]चासे इ वा [12]चासपिच्छे इ वा [13]णीली इ वा [14]णीलीभेदे इ वा [15]णीलीगुलिया इ वा [16]सामाए इ वा [17]उच्चन्तगे इ वा [18]वणराती इ वा [19]हलधरवसणे इ वा [20]मोरग्गीवा इ वा [21]पारेवयग्गीवा इ वा [22]अयसिकुसुमे इ वा [23]बाणकुसुमे इ वा [24]अंजणकेसियाकुसुमे इ वा [25]नीलुप्पले इ वा [26]णीलासोगे इ वा [27]णीलकणवीरे इ वा [28]णीलबंधुजीवे इ वा, [29]भवे एयारूवे सिया? णो इणट्ठे समट्ठे, ते णं णीला मणी एत्तो इट्ठतराए चेव

[३५] १ तत्र तेषां मणीनां मध्ये २ ये ते नीला मणयः ३तेषाम् ४ अयमेतद्रूपो ५ वर्णावासो–वर्णकनिवेशः प्रज्ञप्तः, तद्यथा ६ स यथा नाम ७ भृङ्गः–कीटविशेषः पक्ष्मलः ८भृङ्गपत्रं तस्यैव भृङ्गाभिधानस्य कीटविशेषस्य पक्ष्मः ९ शुकः–कीरः १० शुकपिच्छं–शुकस्य पत्रं ११चाषः–पक्षिविशेषः १२चाषपिच्छं चाषपक्षः १३नीली प्रतीता १४नीलीभेदो–नीलीच्छेदः १५नीलीगुलिका–गुलिका-द्रव्यगुटिका १६ श्यामाको–धान्यविशेषः १७ उच्चंतगो दन्तरागः १८ वनराजी प्रतीता १९ हलधरो–बलदेवस्तस्य वसनं हलधर-वसनं तच्च किल नीलं भवति सदैव तथास्वभावतया, हलधरस्य नीलवस्त्रपरिधानात् २० मयूरग्रीवा–२१ पारापतग्रीवा–२२–अतसी-कुसुम–२३ बाणवृक्षकुसुमानि प्रतीतानि, इत ऊर्ध्वं क्वचित् ='इंदनीले इ वा महानीले इ वा मरगते इ वा' इति दृश्यते तत्रेन्द्रनील–महानील–मरकता रत्नविशेषाः प्रतीताः, २४ अञ्जनकेशिका–वनस्पतिविशेषः तस्य कुसुममञ्जनकेशिकाकुसुमं २५ नीलोत्पलं–कुवलयं, २६ नीलाशोक–२७ नीलकणवीर–२८ नीलबन्धुजीवा अशोकादिवृक्षविशेषाः । २९ 'भवे एयारूवे' इत्यादि प्राग्वद् [पृ०

= विवरणकारनिर्दिष्ट पाठान्तरम् ।

जाव [पृ० ८५ पं० २] वण्णेणं पण्णत्ता ।

[३६] तत्थ[१] णं जे[२] ते लोहियगा मणी तेसिं[३] णं मणीणं इमे[४]यारूवे वण्णावासे[५] पण्णत्ते, से[६] जहा णाम ए सस[७]रुहिरे इ वा उरब्भ[८]रुहिरे इ वा* वराह[९]रुहिरे इ वा मणुस्स[१०]रुहिरे इ वा महिस[११]रुहिरे इ वा बालिंद[१२]गोवे इ वा बाल[१३]दिवाकरे इ वा संझब्भ[१४]रागे इ वा गुंजद्ध[१५]रागे इ वा जासुअण[१६]कुसुमे इ वा किंसुय[१७]कुसुमे इ वा पालि[१८]×यायकुसुमे इ वा जाई[१९]हिंगुलए ति वा सिल[२०]प्पवाले ति वा पवाल[२१]अंकुरे इ वा

---

८५ पं० ३] व्याख्येयम् ।

[३६] तथा १ तत्र तेषां मणीनां मध्ये २ये ते लोहिता मणयः ३तेषाम् ४ अयमेतद्रूपो ५वर्णावासः प्रज्ञप्तः, तद्यथा—६ तद्यथा नाम ७ शशकरुधिरं ८ उरभ्रः—ऊरणस्तस्य रुधिरं, ९ वराहः—शूकरस्तस्य रुधिरं, १० मनुष्यरुधिरं ११ महिषरुधिरं च प्रतीतं एतानि हि किल शेषरुधिरेभ्यो लोहितवर्णोत्कटानि भवन्ति तत एतेषामुपादानम् । १२ बालेन्द्रगोपकः—सद्योजातेन्द्रगोपकः स हि प्रवृद्धः सन्नीषत्पाण्डुरो रक्तो भवति ततो बालग्रहणं इन्द्रगोपकः—प्रथमप्रावृट्कालभावी कीटविशेषः १३ बालदिवाकरः—प्रथममुद्गच्छन् सूर्यः १४ सन्ध्याभ्ररागो—वर्षासु सन्ध्यासमयभावी अभ्ररागः १५ गुञ्जा—लोकप्रतीता तस्यार्द्धे रागो गुञ्जार्द्धरागः, गुञ्जाया हि अर्द्धमतिरक्तं भवति अर्द्धं चातिकृष्णमिति गुञ्जार्द्धग्रहणं १६ जपाकुसुम—१७ किंशुककुसुम—१८—पारिजातकुसुम—१९ जात्यहिङ्गुला लोकप्रसिद्धाः, २०शिलाप्रवालं—प्रवालनामा रत्नविशेषः २१ प्रवालाङ्कुरः—तस्यैव रत्नविशेषस्य प्रवालस्य अङ्कुरः, स हि तत्प्रथमोद्गतत्वेनात्य-

---

* वा नररुहिरे इ वा व—वि० बा० । × स० पारिजात-प्रा० पारिजाय, पारियाय मागधी—पालिजाय, पालियाय ।

रायपसेण-
इयं।

॥८८॥

लोहियक्खमणी[22] इ वा लक्खारसगे[23] ति वा किमिरागकंबले[24] ति वा चीणपिट्ठरासी[25] ति वा रत्तुप्पले[26] इ वा रत्तासोगे[27] ति वा रत्तकणवीरे[28] ति वा रत्तबंधुजीवे[29] ति वा, भवे[30] एयारूवे सिया? णो इणट्ठे समट्ठे, ते णं लोहिया मणी इत्तो इट्ठतराए चेव जाव [पृ० ८५ पं० २] वण्णेणं पण्णत्ता।

[३७] तत्थ[1] णं जे[2] ते हालिद्दा मणी तेसिं[3] णं मणीणं इमेयारूवे[4] वण्णावासे[5] पण्णत्ते-से[6] जहा णाम ए चंपए[7] ति वा चंपछल्ली[8] ति वा चंपगभेए[9] इ वा हलिद्दा[10] इ वा हलिद्दाभेदे[11] ति वा हलिद्दागुलिया[12] ति वा हरियालिया[13] वा हरियालभेदे[14] ति वा हरियालगुलिया[15] ति वा चिउरे[16] इ वा चिउरंगराते[17] ति

न्तरक्तो भवति ततस्तदुपादानं २२ लोहिताक्षमणिर्नाम रत्नविशेषः २३ लाक्षारस-२४ कृमिरागरक्तकम्बल-२५ चीनपिष्टराशि-२६रक्तोत्पल-२७ रक्ताशोक-२८रक्तकणवीर-२९ रक्तबन्धुजीवाः प्रतीताः। ३० 'भवे एयारूवे' इत्यादि [पृ०८५ पं०३] प्राग्वत्।

[३७]१ तत्र तेषां मणीनां मध्ये २ये हरिद्रा मणयः ३तेषाम् ४एतद्रूपो ५वर्णावासः प्रज्ञप्तः, तद्यथा-६स यथा नाम ७चम्पकः सामान्यतः सुवर्णचम्पको वृक्षः, ८ चम्पकच्छल्ली-सुवर्णचम्पकत्वक्, ९ चम्पकभेदः-सुवर्णचम्पकच्छेदः १० हरिद्रा प्रतीता ११ हरिद्राभेदो-हरिद्राच्छेदः १२ हरिद्रागुटिका हरिद्रासारनिर्वर्तिता गुटिका १३ हरितालिका-पृथिवीविकाररूपा प्रतीता १४ हरितालिकाभेदो-हरितालिकाच्छेदः १५हरितालिकागुटिका-हरितालिकासारनिर्वर्तिता गुलिका= १६ चि*कुरो-रागद्रव्यविशेषः १७ ×चिकुराङ्गरागः-

= का विकुरो-पा० ५। * -कुरो गन्धद्रव्य—भा० २। × 'अङ्गराग' स्थाने 'अंगराय' इति अर्वाचीनप्राकृतशब्दविकारापेक्षया जायते, परंतु प्राचीनप्राकृतशब्दविकारापेक्षया 'अंगरात' इति अत्र मूलपाठे उल्लिखितम्। अर्वाचीने हि प्राकृते स्वरात् परेषा असयुक्ताना क-ग-च-ज-त-

वा[४] [१८]वरकणगनिघसे इ वा [१९]वरपुरिसवसणे ति वा अल्लकी[२०]कुसुमे ति वा चंपा[२१]कुसुमे इ वा कुहंडिया[२२]कुसुमे इ वा कोरंटकमल्ल[२३]दामे ति वा तड[२४]वडाकुसुमे इ वा घोसेडिया[२५]कुसुमे इ वा सु[२६]वण्णजूहियाकुसुमे इ वा सुहिरण्ण[२७]कुसुमे ति वा [२८]बीययकुसुमे इ वा पीया[२९]सोगे ति वा पीय[३०]कणवीरे ति वा पीय[३१]बंधुजीवे ति वा, [३२]भवे एयारूवे सिया? णो इणट्ठे समट्ठे, ते णं हालिद्दा मणी एत्तो इट्ठतराए चेव जाव [पृ० ८५ पं० २] वण्णेणं पण्णत्ता।



चिकुरसंयोगनिमित्तो वस्त्रादौ रागः, १८वरकनकस्य–जात्यसुवर्णस्य यः कषपट्टके निवर्षः स वरकनकनिघर्षः १९वरपुरुषो–वासुदेवस्तस्य वसनं वरपुरुषवसनम् तच्च किल पीतमेव भवतीति तदुपादानं, २० अल्लकीकुसुमं लोकतोऽवसेयं, २१ चम्पककुसुमं–सुवर्णचम्पकपुष्पं २२कूष्माण्डीकुसुमं–पुष्पफलीकुसुमम् २३कोरण्टकः–पुष्पजातिविशेषः तस्य दाम कोरण्टकदाम २४ तडवडा–+आउली तस्याः कुसुमं तडवडाकुसुमं २५×घोशातकीकुसुमं २६सुवर्णयूथिकाकुसुमं च प्रतीतं २७सुहिरण्यका–वनस्पतिविशेषस्तस्याः कुसुमं सुहिरण्यकाकुसुमं २८ बीयको वृक्षः प्रतीतः तस्य कुसुमं बीयककुसुमं २९ पीताशोक–३० पीतकणवीर–३१ पीतबन्धुजीवाः प्रतीताः ३२ 'भवे एयारूवे' इत्यादि प्राग्वत्। [पृ० ८५ पं० ३]

द–प–य–वानां (८–१–१७७ हैमश०) विरलमुच्चारण भवति, प्राचीने तु प्राकृते तेषां तादृशा कादीना स्थाने 'त' कारोच्चारण जायमान दृश्यते–अत्र प्राचीनाः प्रयोगा एव प्रमाणम्। यद्वा तकारबहुले उच्चारणे "चर्मण्वती नदीपारे ये चार्बुदसमाश्रिताः। तकारबहुला नित्य तेषु भाषां प्रयोजयेत्॥" (भरतप्रणीत नाट्यशा० अ० १७ श्लो० ६२ नि०) इति वचनं समाधानम्। ४ वा वरकणगे इ वा व—वि० बा०। + भाषायाम्–आवळ। × "कोशातकी पटोलिका"—हैमअभिधानचिन्ता० ४ कां० श्लो० २५४। भाषाया 'पटोल' शाकं प्रतीतम्।

[३८] तत्थ[1] णं जे ते सुक्किल्ला मणी तेसिं[3] णं मणीणं इमे[4]*यारूवे वण्णावासे[5] पण्णत्ते। [6]से जहा नाम ए अंके[7] ति वा [8]संखे ति वा चन्दे[9] ति वा कुमुद[10]-उदक[11]-दयरय[12]-दहि[13]-घणक्खीर[14]-खीरपूरे[15] ति वा कोंचावली[16] ति वा हारावली[17] ति वा हंसावली[18] इ वा बलागावली[19] ति वा, चंदावली[20] ति वा सारतियबलाहए[21] ति वा धंतधोयरूप्पपट्टे[22] इ वा सालि[23]-पिट्ठरासी ति वा कुंदपुप्फरासी[24] ति वा कुमुदरासी[25] ति वा सुक्कछिवाडी[26] ति वा पिहुणमिंजिया[27] ति वा

[३८] १तत्र तेषां मणीनां मध्ये २ये शुक्ला मणयः ३तेषाम् ४ अयमेतद्रूपो ५ वर्णावासः प्रज्ञप्तः, तद्यथा ६ स यथा नाम ७ अङ्को रत्नविशेषः ८ शङ्ख-९ चन्द्र-१०कुमुद-११ उदक-१२ उदकरजो-१३ दधि-१४ घ○नक्षीर-१५ क्षीरपूर-१६ क्रौञ्चावलि-१७हारावलि-१८ हंसावलि-१९ बलाकावलयः प्रतीताः २० चन्द्रावली-तडागादिषु जलमध्यप्रतिबिम्बितचन्द्रपङ्क्तिः २१ शारदिकः-शरत्कालभावी बलाहको-मेघः २२ ध्मातः-अग्निसंपर्केण निर्मलीकृतो धौतः-भूति⁄खरण्टितहस्तसंमार्जनेन अतिनिशितीकृतो यो रूप्यपट्टो-रजतपत्रकं स ध्मातधौतरूप्यपट्टः, ○अन्ये तु व्याचक्षते-"ध्मातेन-अग्निसंयोगेन यो धौतः-शोधितो रूप्यपट्टः स ध्मातधौतरूप्यपट्टः"[ ] २३शालिपिष्टराशिः-शालिक्षोदपुञ्जः, २४कुन्दपुष्पराशिः २५कुमुदराशिश्च प्रतीतः २६ -छेवाडिनाम-वल्लादिफलिका सा च क्वचिद् देशविशेषे शुष्का सती अतीव शुक्ला भवति ततस्तदुपादानम् =पेहुणं-२७ मयूरपिच्छं तन्मध्यवर्त्तिनी पेहुणमिञ्जिका सा

* इमे+एयारूवे=इमेयारूवे। (हैम० ८-१-४०) ○ -नगोक्षीरपूर-मु० पु०। ⁄ -खरटित-पा० ४-५। ○ विवरणकारश्रीमलयगिरिसूरेः पुरातना विवरणकाराः। -'छेवाडी' शब्दो देश्यः। = 'पेहुण' शब्दो देश्यः-"पिच्छम्मि पेहुणं"-देशीना० व० ६ गा० ५८।

[28]भिसे ति वा [29]मुणालिया ति वा [30]गयदंते ति वा [31]लवङ्गदलए ति वा [32]पोंडरियदलए ति वा [33]सेयासोगे ति वा [34]सेयकणवीरे ति वा [35]सेयबन्धुजीवे ति वा, [36]भवे एयारूवे सिया? णो इणट्ठे समट्ठे, ते णं सुक्किला मणी एत्तो इट्ठतराए चेव जाव [पृ० ८५ पं० २] वन्नेणं पण्णत्ता ।

[३९] तेसिं [1] णं मणीणं [2]इमेयारूवे गन्धे पण्णत्ते, [3]से* जहा नाम ए [4]कोट्ठपुडाण [5]वा [6]तगरपुडाण वा [7]एलापुडाण वा [8]चोयपुडाण वा [9]चम्पापुडाण वा [10]दमणापुडाण वा [11]कुंकुमपुडाण वा [12]चंदणपुडाण वा [13]उसीरपुडाण वा [14]मरुआपुडाण वा [15]जातिपुडाण वा [16]जूहियापुडाण वा [17]मल्लियापुडाण वा [18]ण्हाणमल्लियापुडाण वा [19]केतगिपुडाण वा [20]पाडलिपुडाण

चातिशुक्लेति तदुपन्यासः २८ बिसं पद्मिनीकन्दः २९मृणालं पद्मतन्तुः ३० गजदन्त–३१ लवङ्गदल–३२ पुण्डरीकदल–३३ श्वेताशोक–३४श्वेतकणवीर–३५श्वेतबन्धुजीवाः प्रतीताः, ३६'भवे एयारूवे सिया' इत्यादि प्राग्वत्। [पृ० ८५ पं०३] तदेवमुक्तं वर्णस्वरूपम्।

[३९] सम्प्रति गन्धस्वरूपप्रतिपादनार्थमाह–१ तेषां मणीनाम् २अयमेतद्रूपो गन्धः प्रज्ञप्तः ३तद्यथा–ते यथा नाम गन्धा अभिनिर्गच्छन्तीति सम्बन्धः। ४ कोष्ठं–गन्धद्रव्यं तस्य पुटाः कोष्ठपुटास्तेषां ५ 'वा'शब्दः सर्वत्रापि समुच्चये, इह एकस्य पुटस्य प्रायो न तादृशो गन्ध आयाति द्रव्यस्याल्पत्वात् ततो बहुवचनम् ६ तगरमपि गन्धद्रव्यं ७ एलाः प्रतीताः ८ चोयं–गन्धद्रव्यं ९ चम्पक–१०दमनक–११कुङ्कुम–१२चन्दन–१३उशीर–१४मरुक–१५ जाती–१६ यूथिका–१७मल्लिका–१८स्नानमल्लिका–१९ केतकी–२०पाटली–

* "प्राकृतत्वात् 'से' इति बहुवचनार्थः प्रतिपत्तव्य."–राय० वि० ।

वा णोमालिया[21]पुडाण वा अगुरु[22]पुडाण वा लवंगपुडाण[23] वा वास[24]पुडाण वा कप्पूर[25]पुडाण वा अणुवायंसि[26] वा ओभिज्ज[27]माणाण वा[28] कुट्टिज्ज[29]माणाण वा भंजिज्ज[30]माणाण वा उक्किरिज्ज[31]माणाण वा विक्किरिज्ज[32]माणाण वा परिभुज्ज[33]माणाण वा परिभाइज्ज[34]माणाण ⁄ वा भण्डाओ[35] वा भण्डं साहरिज्जमाणाण वा ओराला[36] मणुण्णा[37] मणहरा[38] घाणमणनिव्वु[39]तिकरा

२१नवमालिका–२२अगुरु–२३लवङ्गकुसुम–२४वास–२५ कर्पूराणि प्रतीतानि, नवरम्–१३उशीरं–वीरणीमूलम् १८स्नानमल्लिका-स्नानयोग्यो मल्लिकाविशेषः एतेषां पुटानाम्–२६अनुवाते–आघ्रायकविवक्षितपुरुषाणामनुकूलं वाते वाति सति २७उद्भिद्यमानानामुद्घाट्यमानानाम् २८'वा'शब्दः सर्वत्रापि समुच्चये २९इह पुटैः परिमितानि यानि कोष्ठादीनि गन्धद्रव्याणि तान्यपि–परिमेये परिमाणोपचारात्–'कोष्ठपुटादीनि'इत्युच्यन्ते तेषां कुट्यमानानाम्–उदूखले कुटयमानानाम् ३० श्लक्ष्णखण्डीक्रियमाणानाम् एतच्च विशेषणद्वयं कोष्ठादिद्रव्याणामवसेयं तेषामेव प्रायः कुट्टन–श्लक्ष्णखण्डीकरणसम्भवात् न तु यूथिकादीनां ३१ क्षुरिकादिभिः कोष्ठादिपुटानां कोष्ठादिद्रव्याणां वा उत्कीर्यमाणानाम् ३२ विकीर्यमाणानाम्–इतस्ततो विप्रकीर्यमाणानाम् ३३ परिभोगाय उपयुज्यमानानाम् ३४ क्वचित् 'परिभाइज्जमाणाण वा'इति पाठस्तत्र परिभाज्यमानानां–पार्श्ववर्त्तिभ्यो मनाग् मनाग् दीयमानानाम् ३५ भाण्डात्–स्थानादेकस्मादन्यद् भाण्डं–भाजनान्तरं संह्रियमाणानाम्। ३६ उदाराः–स्फाराः ३७ ते चामनोज्ञा अपि स्युरत आह–मनोज्ञा–मनोऽनुकूलाः ३८ तच्च मनोज्ञत्वं कुतः ? इत्याह–मनोहराः–मनो हरन्ति–आत्मवशं नयन्तीति मनोहराः ३९ इतस्ततो विप्रकीर्यमाणानां मनोहरत्वं कुतः ?

⁄ विवरणकारदर्शितं पाठान्तरम्।

सव्वतो[40] समन्ता[41] गंधा[42] [43]अभिनिस्सरंति, [44]भवे एयारूवे सिया? [45]णो इणट्ठे समट्ठे, ते णं मणी एत्तो इट्ठतराए चेव [पृ० ८५ पं० २] गंधेणं पन्नत्ता।

[४०] ≈[1]तेसिं णं मणीणं [2]इमेयारूवे [3]फासे पण्णत्ते, [4]से जहा नाम ए [5]आइणे ति वा [6]रूए ति वा [7]बूरे इ वा णवणीए [8] इ वा [9]हंसगब्भतूलिया इ वा [10]सिरीसकुसुमनिचये इ वा [11]बालकुसुदपत्तरासी ति वा



इत्याह–घ्राण–मनोनिर्वृतिकराः एवंभूताः ४० सर्वतः–सर्वासु दिक्षु ४१ समन्ततः–सामस्त्येन ४२ गन्धा ४३ अभिनिस्सरन्ति–जिघ्रतामभिमुखं निस्सरन्ति, क्वचित् "'अभिनिस्सवन्ति'इति पाठः तत्रापि स एवार्थः नवरम् 'अभितः स्रवन्ति'इति शब्दसंस्कारः। एवमुक्ते शिष्यः पृच्छति–४४'भवे एयारूवे सिया?' स्यादेतत् यथा भवेद् एतद्रूपस्तेषां मणीनां गन्धः? सूरिराह–४५ 'नो इणट्ठे समट्ठे' इत्यादि प्राग्वत् [पृ० ८५ पं० १–२]।

[४०] १ तेषां मणीनाम् २ अयमेतद्रूपः ३ स्पर्शः प्रज्ञप्तः, ४तद्यथा–५ अजिनकं–चर्ममयं वस्त्रम् ६ रूतं–प्रतीतम् ७बूरो–वनस्पतिविशेषः ८ नवनीतं–म्रक्षणम् ९ हंसगर्भतूली–१०शिरीषकुसुमनिचयश्च प्रतीतः, ११ बालानि–अचिरकालजातानि यानि कुमुद-

≈ व्याकरणशास्त्रसिद्धं 'तेसिं' इति रूपम्, परंतु अत्र मूले क्वचित् 'तेसिं' इति रूपम् क्वचिच्च 'तेसि' पाठनियमेन परिशुद्धं प्रतिभाति। इति रूपं समुपलभ्यते। 'तेसिं णं' अत्र परवर्तिनि अनुनासिके णकारे पूर्ववर्ती अनुनासिकः–अनुस्वारो लुप्त इति 'तेसि ण' इत्यपि रूप वाग्व्या- ˇ "रूअ तूले"–देशीनाममाला वर्ग ७ गा० ९। भाषायाम् 'रू' इति प्रसिद्धम्। ˇ विवरणकारदर्शितः पाठभेदः।

[12]भवे एयारूवे सिया? णो इणट्ठे समट्ठे, ते णं मणी एत्तो इट्ठतराए चेव जाव [पृ० ८९ पं० २] फासेणं पन्नत्ता।

[४१][1]तए णं [2]से आभियोगिए देवे [3]तस्स दिव्वस्स जाणविमाणस्स [4]बहुमज्झदेसभागे एत्थ णं [5]महं पिच्छाघरमण्डवं [6]विउव्वइ= [7]अणेगखम्भसयसंनिविट्ठं [8]अब्भुग्गयसुकयवरवेइयातोरणवररइयसालभंजियागं सुसिलिट्ठविसिट्ठलट्ठसंठियपसत्थवेरुलियविमलखम्भं णाणा॰मणिखचियउज्जलबहुसमसुविभत्तभूमिभागं [11]ईहामिय-उसभ-

पत्राणि तेषां राशिर्बालकुमुदपत्रराशिः, क्वचिद् °'बालकुसुमपत्रराशिः' -इति पाठः १२ 'भवे एयारूवे' इत्यादि प्राग्वत्। [पृ० ८९ पं० १-२]

[४१] १ततः २स आभियोगिको देवः ३तस्य दिव्यस्य यानविमानस्य ४बहुमध्यदेशभागे अत्र ५महत् प्रेक्षागृहमण्डपं ६विकुर्वति, कथम्भूतम्? इत्याह-७अनेकस्तम्भशतसन्निविष्टम्। तथा ८अभ्युद्गता-अत्युत्कटा सुकृता-सुष्ठु निष्पादिता वरवेदिकाः तोरणानि वररचिताः शालभञ्जिकाश्च यत्र तद् अभ्युद्गतसुकृतवरवेदिकातोरणवररचितशालभञ्जिकाकम् तथा ९ सुश्लिष्टा विशिष्टा लष्टसंस्थिताः-मनोज्ञसंस्थानाः प्रशस्ताः-प्रशस्तवास्तुलक्षणोपेता वैडूर्यविमलस्तम्भा-वैडूर्यरत्नमया विमलाः स्तम्भा यत्र तत् सुश्लिष्टविशिष्टलष्टसंस्थितप्रशस्तवैडूर्यविमलस्तम्भम् तथा १० नाना मणयः खचिता यत्र भूमिभागे स नानामणिखचितः○ नानामणिखचित उज्ज्वलो बहुसमः-अत्यन्तसमः सुविभक्तो भूमिभागो यत्र तत् नानामणिखचितोज्ज्वलबहुसमसुविभक्तभूमिभागम् तथा ११ ईहामृगा-वृकाः

= मूलपाठे क्वचित् 'विउव्वइ' इति क्वचिच्च 'विउव्वंति' इति पाठो लभ्यते परन्तु नात्र अर्थभेदः। ○ -मणिकणगरयणख-वि० बा०।
° विवरणकारदर्शित पाठान्तरम्। -इति भावः-पा० ४-५ भा० १। ○ 'सुखादिदर्शनात् क्तान्तस्य पाक्षिकः परनिपातः" [पृ० ४८ *

तुरग–नर–मगर-विहग-वालग–किंनर–रुरु–सरभ–चमर–कुञ्जर–वणलय–पउमलयभत्तिचित्तं ○[12]खम्भुग्गयवइरवेइयापरिगयाभिरामं [13]विज्जाहरजमलजुयलजंतजुत्तं पिव [14]अच्चीसहस्समालणीयं [15]रूवगसहस्सकलियं भिसमाणं भिब्भिसमाणं चक्खुल्लोयणलेसं सुहफासं सस्सिरीयरूवं [पृ० ७६ पं० २–४] [16]कंचणमणिरयणथूभियागं [17]णाणाविहपञ्चवण्णघण्टापडागपरिमण्डियग्गसिहरं

ऋषभा–वृषभाः तुरग–नर–मकर–विहगाः प्रतीताः व्यालाः–श्वापदभुजगाः किंनरा–व्यन्तरविशेषाः रुरवो–मृगाः सरभाः–आटव्या महाकायाः पशवः चमरा–आटव्या गावः कुञ्जराः–दन्तिनः वनलता–अशोकादिलताः पद्मलताः–पद्मिन्यः एतासां भक्त्या–विच्छित्त्या चित्रम्–आलेखो यत्र तद् ईहामृग–ऋषभ–तुरग–नर–मकर–विहग–व्याल–किन्नर–रुरु–सरभ–चमर–कुञ्जर–वनलता–पद्मलताभक्तिचित्रम् तथा १२ स्तम्भोद्गतया–स्तम्भोपरिवर्त्तिन्या वज्ररत्नमय्या वेदिकया परिगतं सद् यदभिरामं तत् स्तम्भोद्गतवज्रवेदिकापरिगताभिरामम् १३ विद्या धरन्तीति विद्याधरा–विशिष्टविद्याशक्तिमन्तः तेषां यमलयुगलानि–समानशीलानि द्वन्द्वानि तेषां यन्त्राणि–प्रपञ्चविशेषास्तैर्युक्तमिव १४ अर्चिषां–मणिरत्नप्रभाज्वालानां सहस्रैर्मालनीयं–परिवारणीयम् किमुक्तं भवति ?–एवं नाम अत्यद्भुतैर्मणिरत्नप्रभाजालैराकलितमिव भाति यथा नूनमिदं न स्वाभाविकम् किन्तु विशिष्टविद्याशक्तिमत्पुरुषप्रपञ्चप्रभावितमिति, १५ 'रूवगसहस्सकलियं......सस्सिरीयरूवं' प्राग्वत् [पृ० ७६ पं०६–१२] १६ काञ्चनं च मणयश्च रत्नानि च काञ्चनमणिरत्नानि तेषां–तन्मयी स्तूपिका–शिखरं यस्य तत् तथा १७ नानाविधाभिः–नानाप्रकाराभिः पञ्चवर्णाभिर्घण्टाभिः पताकाभिश्च परि–सामस्त्येन मण्डितमग्र·

टिप्पण]–राय० वि०। ○ 'खभुगय' इत आरभ्य 'सस्सिरीयरूवं' इत्यन्त–"क्वचिद् एतन्न दृश्यते"–राय० वि०।

[१८]चवलं ÷मरीचिकवयं विणिम्मुयन्तं लाइय[२०]-उल्लोइय[२१]महियं [२२]गोसीससरसरत्तचंदणदद्दरदिन्नपंचंगुलितलं [२३]उवचियचन्दणकलसं [२४]चन्दणघडसुकयतोरणपडिदुवारदेसभागं [२५]आसत्तोसत्तविउलवट्टवग्घा[२६]रियमल्लदामकलावं [२७]पञ्चवण्णसरससुरभिमुक्कपुप्फपुंजोवयारकलियं [२८]कालागुरुपवरकुंदरुक्कतुरुक्कधूवमघमघंतगंधुद्धुयाभिरामं [पृ०७ पं०४–]

शिखरं यस्य तद् नानाविधपञ्चवर्णघण्टापताकापरिमण्डिताग्रशिखरम् १८ चपलं–चलं चिकचिकायमानत्वात् १९ मरीचिकवचं–किरणजालपरिक्षेपं विनिर्मुञ्चत् २० लाइयं नाम–यद् भूमेर्गोमयादिनोपलेपनम् २१ उल्लोइयं–कुडयानां मालस्य च सेटिकादिभिः सम्मृष्टीकरणम् लाइय–उल्लोइयाभ्यामिव महितं–पूजितं लाइय–उल्लोइयमहियं तथा २२ गोशीर्षेण–गोशीर्षनामकचन्दनेन सरसरक्तचन्दनेन च दर्दरेण–बहलेन चपेटाकारेण वा दत्ताः पञ्चाङ्गुलितला–हस्तका यत्र तद् गोशीर्षसरसरक्तचन्दनदर्दरदत्तपञ्चाङ्गुलितलम् तथा २३ उपचिता–निवेशिताः चन्दनकलशा–मङ्गलकलशा यत्र तद् उपचितचन्दनकलशम् २४ चन्दनघटैः–चन्दनकलशैः सुकृतानि–सुष्ठु कृतानि शोभितानीति तात्पर्यार्थः यानि तोरणानि तानि चन्दनघटसुकृतानि तानि तोरणानि प्रति द्वारदेशभागं–द्वारदेशभागे यत्र तत् चन्दनघटसुकृततोरणप्रतिद्वारदेशभागम् तथा २५आ–अवाङ्–अधोभूमौ सक्त आसक्तो–भूमौ लग्न इत्यर्थः ऊर्ध्वं सक्त उत्सक्तः–उल्लोचतले उपरि संबद्ध, इत्यर्थः विपुलो–विस्तीर्णः वृत्तो–वर्तुलः २६ 'वग्घारिय' इति–प्रलम्बितो माल्यदामकलापः–पुष्पमालासमूहो यत्र तद् आसक्तोत्सक्तविपुलवृत्तप्रलम्बितमाल्यदामकलापम् तथा २७ पञ्चवर्णेन सरसेन–सच्छायेन सुरभिणा मुक्तेन–क्षिप्तेन पुष्पपुञ्जलक्षणेनोपचारेण–पूजया कलितं पञ्चवर्णसरससुरभिमुक्तपुष्पपुञ्जोपचारकलितम् २८ 'कालागुरु...गंधवट्टिभूतं' इति

÷ 'मरीचि' स्थाने आर्षत्वात् 'मरीति' इति–पृ० ८८ × टिप्पण ।

सुगंधवरगन्धियं गन्धवट्टिभूतं अच्छरगण[29]संघसंविकिण्णं दिव्वतुडिय[30]सद्दसंपणाइयं अच्छं[31] [पृ० ११ पं० ५]जाव पडिरूवं। तस्स[32] णं पिच्छाघर[33]मण्डवस्स अंतो[34] बहुसम[35]रमणिज्जभूमिभागं विउव्वंति[36] [कंडिका० ३३-४०] जाव पडिरूवं। तस्स[37] णं पेच्छाघरमंडवस्स उल्लोयं[38] विउव्वंति[39] पउमलय[40]भत्तिचित्तं जाव[41] [पृ०१९ पं०५] पडिरूवं। मणीणं फासो। तस्स णं पेच्छाघरमंडवस्स उल्लोयं विउव्वंति पउमलयभत्तिचित्तं जाव पडिरूवं।

[४२] तस्स[1] णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए[2] एत्थ[3] णं एगं[4] महं वइरामयं अक्खाडगं[5] विउव्वंति[6]। तस्स[7] णं अक्खाडयस्स

---

[पृ० ७ पं० ४-] प्राग्वत्, तथा २९ अप्सरोगणानां सङ्घः-समुदायस्तेन सम्यग्-रमणीयतया विकीर्णं-व्याप्तम्-अप्सरोगणसङ्घसंविकीर्णम् तथा ३० दिव्यानां त्रटितानाम् आतोद्यानां-वेणुवीणामृदङ्गादीनां ये शब्दास्तैः सम्प्रणादितं-सम्यक्-श्रोत्र-मनोहारितया प्रकर्षेण नादितं-शब्दवद् दिव्यत्रुटितशब्दसम्प्रणादितम् ३१ 'अच्छं जाव पडिरूवं'इति 'यावत्' शब्दकरणात् 'सण्हं अभिरूवं पडिरूवं' इति द्रष्टव्यम् एतच्च प्राग्वद् [पृ० १९ पं० ८] व्याख्येयम्। ३२ तस्य ३३ प्रेक्षागृहमण्डपस्य ३४ अन्तः-मध्ये ३५ बहुसमरमणीयं भूमिभागं ३६ विकुर्वंति तद्यथा-'आलिङ्गपुष्करमिति वा' [कण्डिका ३३-४०-पृ० ८१ पं० १२-] इत्यादि तदेव तावद् वक्तव्यं यावद् मणिस्पर्शसूत्रपर्यन्तः, तथा चाह-'जाव मणीणं फासो' इति। ३७ तस्य प्रेक्षागृहमण्डपस्य ३८ उल्लोकम्-उपरिभागं ३९ विकुर्वंति ४० पद्मलताभक्तिचित्रम् ४१ 'जाव पडिरूवं' इति 'यावत्' शब्दकरणात् 'अच्छं सण्हं' [पृ० १९, पं० ८-] इत्यादिविशेषणकदम्बकपरिग्रहः।

[४२] १तस्य-बहुसमरमणीयस्य भूमिभागस्य २बहुमध्यदेशभागे ३अत्र ४एकं महान्तं वज्रमयम् ५अक्षपाटं ६विकुर्वंति, ७तस्य

[8]बहुमज्झदेसभागे [9]एत्थ णं [10]महेगं मणिपेढियं [11]विउव्वंति [12]अट्ठ जोयणाइं आयामविक्खम्भेणं [13]चत्तारि जोयणाइं बाहल्लेणं [14]सव्वमणिमयं [15]अच्छं सण्हं जाव [पृ० १९ पं० ५] पडिरूवं। [16]तीसे णं मणिपेढियाए [17]उवरिं [18]एत्थ णं [19]महेगं सीहासणं [20]विउव्वंइ, [21]तस्स णं सीहासणस्स [22]इमेयारूवे [23]वण्णावासे पण्णत्ते-[24]तवणिज्जमया चक्कला [25]रययामया सीहा [26]सोवण्णिया पाया [27]णाणामणिमयाइं पायसीसगाइं [28]जंबूणयमयाइं गत्ताइं [29]वइरामया संधी [30]णाणामणिमये वेच्चे, [31]से णं सीहासणे [32]ईहामिय-उसभ-तुरग-नर-मगर-विहग-वालग-किंनर-रुरु-सरभ-

---

चाक्षपाटकस्य ८ बहुमध्यदेशभागे ९अत्र १०एकां महतीं मणिपीठिकां ११विकुर्वंति १२ अष्टौ योजनानि आयाम-विष्कम्भाभ्याम् १३चत्वारि योजनानि बाहल्येन-उच्चैस्त्वेनेति भावः, कथम्भूतां तां विकुर्वंति? इत्यत आह-१४सर्वमणिमयीम्-सर्वात्मना मणिमयीं 'यावत्' करणात् १५ 'अच्छाम्' इत्यादिविशेषणसमूहपरिग्रहः [पृ० १९ पं० ८] १६ तस्याश्च मणिपीठकाया १७ उपरि १८ अत्र १९महदेकं सिंहासनं २० विकुर्वंति २१तस्य च सिंहासनस्य २२अयमेतद्रूपो २३वर्णावासः प्रज्ञप्तः, तद्यथा-२४तपनीयमयाः =चक्कला २५रजतमयाः सिंहा यैरुपशोभितं तत् सिंहासनमुच्यते २६सौवर्णिकाः-सुवर्णमयाः पादाः २७नानामणिमयानि पादशीर्षकाणि-पादानामुपरितना अवयवविशेषाः, २८ जाम्बूनदमयानि गात्राणि २९ वज्रमया-वज्ररत्नापूरिताः सन्धयो-गात्राणां सन्धिमेलाः ३० नाना मणि○मयं वेच्चं-व्युतम्। ३१ तत् सिंहासनम् ३२ ईहामृग-ऋषभ-तुरग-नर-मकर-व्यालक-किन्नर-रुरु-सरभ-चमर-वनलता-

---

= 'चक्कल' इत्ययं शब्दो देश्य -"कुण्डल-वट्टुल-दोलाफलय-विसालेसु चक्कलय'-चक्कलं कुण्डलम् वर्तुलम् दोलाफलकम् विशालं चेति चतुर्थं."-देशीनाम० व० ३ गा० २०। भाषायाम् 'चाकळा' इति प्रतिभाति। ○ -मयं वच्च-पा० ५ ।-मयं वद्दं पा० ४ ।- मय वेच्च

चमर-कुञ्जर-वणलय-पउमलयभत्ति [पृ० ७६ पं० २] चित्तं [33]ससारसारोवचियमणिरयणपायवीढे [34]अत्थरगमिउमसूरगणवतयकुसंतलिंबकेसरपचत्थुयाभिरामे [35]आईणग-रूय-बूर-णवणीय-तूलफासमउए [कण्डिका ४०] [36]सुविरइयरयत्ताणे [37]उवचियखोमदुगुल्लपट्टपडिच्छायणे [38]रत्तंसुअसंवुडे [39]सुरम्मे [40]पासाईए दरिसणिज्जे अभिरूवे पडिरूवे।

पद्मलताभक्ति [पृ० ७६ पं० ६] चित्रम्। ३३ सारसारैः-प्रधानैः ४मणिरत्नैरुपचितेन पादपीठेन सह यत् तत् तथा, ३४ आस्तरकम्-आच्छादकं मृदु यस्य ⊖मसूरकस्य तद् आस्तरकमृदु,+ नवा त्वक् येषां ते नवत्वचः कुशान्ताः-दर्भपर्यन्ता नवत्वचश्च ते कुशान्ताश्च नवत्वक्कुशान्ताः-प्रत्यग्रत्वग्दर्भपर्यन्तरूपाणि लिम्बानि-कोमलानि नमनशीलानि च केसराणि मध्ये यस्य मसूरकस्य तत् नवत्वक्कुशान्तलिम्बकेसरम् आस्तरकमृदुना मसूरकेण नवत्वक्कुशान्तलिम्बकेसरेण =प्रत्यवस्तृतम्-आच्छादितं सत् यदभिरामं तत् तथा, ३५ [कण्डिका ४०] पूर्ववत् तथा ३६सुविरचितं रजस्त्राणमुपरि यस्य तत् सुविरचितरजस्त्राणम् ३७ उपचितं-परिकर्मितं यत् क्षौमं दुकूलं-कार्पासिकं वस्त्रं परिच्छादनं रजस्त्राणस्योपरि द्वितीयमाच्छादनं यस्य तत् तथा, तत उपरि ३८रक्तांशुकेन-अतिरमणीयेन रक्तेन वस्त्रेण संवृतम्-आच्छादितम् अत एव ३९सुरम्यम् ४०'पासाइए दरिसणिज्जे अभिरूवे पडिरूवे' इति [पृ०७ पं०१ तथा पृ०९ पं०६] प्राग्वत्।

तत्-व्युतम्-भा० १। -मय वेट्ठ² भा० २। ४ "प्राकृतत्वाच्च * पदोपन्यासव्यत्ययः"—राय० वि०। ⊖ भाषायाम्-'गालमसूरियुं' इति प्रसिद्धम्। + "विशेषणपूर्वापरनिपातः यादृच्छिकः प्राकृतत्वात्"-राय० वि०। = "विशेषणस्य परनिपातः प्राकृतत्वात्"-राय० वि०।

* मूले 'उवचियमणिरयण' इति उपचित-मणिरत्न-पदयोर्व्यत्ययः। -'मणिरत्नोपचित'-इति उचितम्।

रायपसेणइयं ।

॥१००॥

[४३] तस्स[1] णं सीहासणस्स उवरिं[2] एत्थ[3] णं महेगं[4] विजयदूसं[5] विउव्वंति[6], संख[7]-कुंद-दगरय-अमयमहियफेणपुंजसंनिगासं सव्व[8]रयणामयं अच्छं[9] सण्हं पासादीयं दरिसणिज्जं अभिरूवं पडिरूवं। तस्स[10] णं सीहासणस्स उवरिं[11] विजयदूसस्स[12] य बहुमज्झ[13]देसभागे एत्थ णं महं[14] एगं वयरामयं[15] अंकुसं विउव्वंति[16], तंसि[17] च णं वयरामयंसि अंकुसंसि [18]कुंभिक्कं मुत्तादामं विउव्वंति[19]। से[20] णं कुंभिक्के मुत्तादामे अन्नेहिं[21] चउहिं अद्धकुंभिक्केहिं मुत्तादामेहिं—

सिंहासने विजयदूष्यम् तत्र च कुम्भपरिमाणानि मौक्तिकानि

[४३] १तस्य सिंहासनस्य २उपरि उल्लोके ३अत्र अस्मिन् स्थाने ४महदेकं ५विजयदूष्यं–वस्त्रविशेषः, आह च जीवाभिगममूलटीकाकृत्–"विजयदूष्यं वस्त्रविशेषः" [ ] इति। तं ६विकुर्वन्ति–स्वशक्त्या निष्पादयन्ति, कथम्भूतम्? इत्याह–७ शङ्ख–कुन्द–दकरजो–ऽमृतमथितफेनपुञ्जसन्निकाशम्–शङ्खः प्रतीतः, कुन्द इति–कुन्दकुसुमम् दकरजः–उदककणाः अमृतस्य–क्षीरोदधिजलस्य मथितस्य यः फेनपुञ्जो–डिण्डीरोत्करः तत्सन्निकाशं–तत्समप्रभम् पुनः कथम्भूतम्? इत्याह–८सर्वात्मना रत्नमयम् ९'अच्छं सण्हं पासाइयं'इत्यादिविशेषणजालं प्राग्वत् [पृ०१९ पं०८]। १० तस्य सिंहासनस्य–११ उपरि १२ तस्य विजयदूष्यस्य १३बहुमध्यदेशभागेऽत्र १४महान्तमेकं १५ वज्रमयं–वज्ररत्नमयमङ्कुशम्–अङ्कुशाकारं मुक्तादामावलम्बनाश्रयं १६ विकुर्वन्ति १७ तस्मिंश्च वज्ररत्नमयेऽङ्कुशे महदेकं १८ *कुम्भाग्रं–मगधदेशप्रसिद्धं कुम्भपरिमाणं मुक्तादाम १९ विकुर्वन्ति। २०तत् कुम्भाग्रं मुक्तादाम २१ अन्यैश्चतुर्भिः कुम्भाग्रैः–कुम्भ-

* "अग्र पुरस्तात्, उपरि, परिमाणे"–इति मेदिनी–[अमर० टी० पृ० ३२९] इति वचनात् अत्र 'अग्र' शब्दः परिमाणवाची बोध्यः–कुम्भाग्रम्––कुम्भपरिमाणम् ।

[22]तद्द्धुच्चत्तपमाणेहिं [23]सव्वओ [24]समंता [25]संपरिखित्ते। [26]ते णं दामा [27]तवणिज्जलंबूसगा* [28]णाणामणिरयणविविहहार-द्धहारउवसोभियसमुदाया [29]ईसिं अण्णमण्णमसंपत्ता [30]वाएहिं पुव्वावरदाहिणुत्तरागएहिं [31]मंदायं मंदायं =[32]एज्ज-माणाणि एज्जमाणाणि [33]पलंबमाणाणि× पलंबमाणाणि [34]वंदमाणाणि वदमाणाणि [35]उरालेणं [36]मणुन्नेणं [37]मणहरेणं

परिमाणैर्मुक्तादामभिः २२तदर्धोच्चत्वप्रमाणमात्रैः २३ सर्वतः सर्वासु दिक्षु २४ समन्ततः–सामस्त्येन २५ सम्परिक्षिप्तं–व्याप्तम्। २६ तानि पश्चापि दामानि २७ तपनीयमया लम्बूसगा–आभरणविशेषरूपा अग्रभागे येषां प्रलम्बमानानां तानि तथा २८ नानामणिरत्नैः नानामणिरत्नमयैर्विविधैः–विचित्रैर्हारैरर्धहारैश्चोपशोभितः–सामस्त्येन शोभितः समुदायो येषां तानि तथा २९ तथा ईषत् मनाक् अन्योऽन्यं–परस्परम् असंप्राप्तानि–असंलग्नानि ३० पूर्वापरदक्षिणोत्तरागतैः[8] ३१ 'मन्दायं मन्दायं' इति मन्दं मन्दं ३२ कम्पमानानि ३३ ईषत्कम्पनवशादेव प्रकर्षत इतस्ततो मनाक् चलनेन लम्बमानानि लम्बमानानि ततः ३४ परस्परं सम्पर्कवशतः शब्दायमानानि शब्दायमानानि ३५ उदारेण स्फारेण शब्देनेति योगः स च स्फारः शब्दो मनःप्रतिकूलोऽपि भवति तत आह–३६ मनोज्ञेन मनो-ऽनुकूलेन ३७ तच्च मनोऽनुकूलत्वं लेशतः स्यात् अत आह–मनोहरेण मनांसि श्रोतॄणां हरति–एकान्तेनात्मवशं नयतीति मनोहरः○

* –गा सुवण्णपयरगमंडियग्गा णा–वि० बा०। = "भृशाभीक्ष्ण्याऽविच्छेदे द्विः प्राक् तमबादेः"–[७–४–७३ हैमश०] इति अविच्छेदे द्विर्वचनम् यथा–'पचन्ति पचन्ति' इत्यत्र, एवमुत्तरत्राऽपि"–राय० वि०। × –गि वज्जमा–पा० १। –णि पझंझमा–भा० १।–णि पझझमा– पा० ३। –णि पडंडमा–पा० ५।–णि पब्भक्खमा–पा० २। 8 'वातैः' इति शेषः। ○ "लिहादेः आकृतिगणत्वाद् 'अच्' प्रत्ययः"–राय०वि०। "लिहादिभ्यः"–(५-१–५० हैमश०) अत्र 'हृ' धातोः 'अच्'प्रत्यये हरः–मनोहरः।

क[३९]ण्ण-मणणिव्वुतिकरेणं स[४०]द्देणं ते पएसे स[४१]व्वओ सम[४२]ंता आ[४३]पूरेमाणा आपूरेमाणा सिरीए[४४] अतीव अतीव उवसोभेमाणा उवसोभेमाणा [४५]चिट्ठंति।

[४४][१]तए णं से आभिओगिए देवे त[२]स्स सीहासणस्स अव[३]रुत्तरेणं उ[४]त्तरेण उत्तरपुरत्थिमेणं[५] एत्थ णं सूरिआभस्स[६] देवस्स चउ[७]ण्हं सामाणियसाहस्सीणं [८]चत्तारि भद्दासणसाहस्सीओ विउ[९]व्वइ, तस्स णं सीहासणस्स

तेन ३८ तदपि मनोहरत्वं कुतः ? इत्याह-कर्ण-मनोनिर्वृतिकरेण ○ ततोऽयमर्थः-प्रतिश्रोतृ कर्णयोर्मनसश्च निर्वृतिकरः-सुखोत्पादकस्ततो मनोहरस्तेनेत्थम्भूतेन ३९ शब्देन ४० तान् प्रत्यासन्नान् प्रदेशान् ४१ सर्वतो-दिक्षु ४२ समन्ततो-विदिक्षु ४३ आपूरयन्ति-आपूरयन्ति, अत एव ४४ श्रिया-शोभया अतीवोपशोभमानानि ४५ तिष्ठन्ति।

[४४] १ ततः स आभियोगिको देवः २तस्य सिंहासनस्य ३अपरोत्तरेण-वायव्ये कोणे इत्यर्थः, ४ उत्तरेण-उत्तरस्याम् ५ ऐशान्याम् अत्र एतासु तिसृषु दिक्षु ६ सूर्याभस्य देवस्य ७ चतुर्णाम् सामानिकसहस्राणां योग्यानि ८ चत्वारि भद्रासनसहस्राणि ९ वि-

○ "निमित्त-कारण-हेतुषु सर्वासां विभक्तीनां प्रायो दर्शनम्-( सर्वनाम्नस्तृतीया च २-३-७ काशिकावृत्तौ ) इति वचनात् हेतौ तृतीया"-राय० वि०। ⁄ "शत्रन्तस्य ⁄'शौ' इदं रूपम्" पा० ४-५ भा० १। "शत्रन्तस्य स्यादू इद रूपम्"-भा० २। "शत्रन्तस्य स्यादौ इद रूपम्"-मु० पु०।

⁄ वर्तमानकालसूचकः 'शतृ' प्रत्ययः तेन आ+पूरय्+अत्-'आपूरयत्' इति प्रयोगे साधिते प्रथमाबहुवचने शौ 'आपूरयन्ति'।

[१०]पुरित्थमेणं एत्थ णं सूरियाभस्स देवस्स [११]चउण्हं अग्गमहिसीणं [१२]सपरिवाराणं [१३]चत्तारि भद्दासणसाहस्सीओ विउव्वइ, तस्स णं सीहासणस्स [१४]दाहिणपुरत्थिमेणं एत्थ णं सूरियाभस्स देवस्स [१५]अब्भितरपरिसाए [१६]अट्ठण्हं देवसाहस्सीणं [१७]अट्ठ भद्दासणसाहस्सीओ विउव्वइ, एवं [१८]दाहिणेणं [१९]मज्झिमपरिसाए [२०]दसण्हं देवसाहस्सीणं [२१]दस भद्दासणसाहस्सीओ विउव्वति [२२]दाहिणपच्चत्थिमेणं [२३]बाहिरपरिसाए [२४]बारसण्हं देवसाहस्सीणं [२५]बारस भद्दासणसाहस्सीओ विउव्वति [२६]पच्चत्थिमेणं [२७]सत्तण्हं अणियाहिवतीणं [२८]सत्त भद्दासणे विउव्वति, [२९]तस्स णं सीहासणस्स [३०]चउदिसिं एत्थ णं [३१]सूरियाभस्स देवस्स [३२]सोलसण्हं आयरक्खदेवसाहस्सीणं [३३]सोलस भद्दासणसाहस्सीओ विउव्वति, [३४]तंजहा–[३५]पुरत्थिमेणं चत्तारि साहस्सीओ [३६]दाहिणेणं चत्तारि साहस्सीओ [३७]पच्चत्थिमेणं चत्तारि साहस्सीओ [३८]उत्तरेण चत्तारि

कुर्वंति, १० पूर्वस्यां ११ चतसृणामग्रमहिषीणां १२सपरिवाराणां १३चत्वारि भद्रासनसहस्राणि, १४दक्षिणपूर्वस्याम् १५अभ्यन्तरपर्षदः १६ अष्टानां देवसहस्राणां योग्यानि १७ अष्टौ भद्रासनसहस्राणि, १८ दक्षिणस्यां १९ मध्यमपर्षदो २० दशानां देवसहस्राणां योग्यानि २१ दश भद्रासनसह ाणि २२ दक्षिणापरस्यां नैर्ऋतकोणे इत्यर्थः, २३ बाह्यपर्षदो २४ द्वादशानां देवसहस्राणां २५ द्वादश भद्रासनसहस्राणि २६ पश्चिमायां २७ सप्तानामनीकाधिपतीनां २८ सप्त भद्रासनानि विकुर्वंति। तदनन्तरं २९ तस्य सिंहासनस्य ३० चतसृषु दिक्षु अत्र सामानिकादिदेवभद्रासनानां पृष्ठतः ३१ सूर्याभस्य देवस्य सम्बन्धिनां ३२ षोडशानामात्मरक्षदेवसहस्राणां योग्यानि ३३ षोडश भद्रासनसहस्राणि विकुर्वंति, ३४ तद्यथा–३५चत्वारि भद्रासनसहस्राणि पूर्वस्याम् ३६चत्वारि दक्षिणतः ३७चत्वारि पश्चिमायाम् ३८चत्वारि उत्तरतः–सर्वसंख्यया सप्ताधिकानि चतुःपञ्चाशत्सहस्राणि–५४००७–भद्रासनानां विकुर्वंति।

[७२) चंदा[१]गमणप० च सूरा[२]गमणप० च आगमणा[३]गमणप० च =णामं...[४]उवदंसेंति [७]

[७३] चंदा[१]वरणप० सूरा[२]वरणप० च आ[३]वरणावरणप० णामं...उवदंसेंति [८]

[७४] चंद[१]त्थमणप० च सूर[२]त्थमणप० अत्थमण[३]त्थमणप० नामं...उवदंसेंति [९]

[७५] चंद[१]मंडलप० च सूर[२]मंडलप० च ना[३]गमंडलप० च जक्ख[४]मंडलप० च भूत[५]मंडलप० च [⊖रक्खस–महोरग–गन्धव्वमंडलप० च] मंडल[६]मंडलप० नामं...उवदंसेंति [१०] ९

[७२] तत उक्तप्रकारेण १चन्द्रागमनप्रविभक्ति–२सूर्यागमनप्रविभक्तियुक्तम् ३आगमनप्रविभक्ति ४ नाम सप्तमं नाटयविधिम् ५उपदर्शयन्ति [७]

[७३] तदनन्तरम् उक्तक्रमेण १चन्द्रावरणप्रविभक्ति–२सूर्यावरणप्रविभक्तियुक्तम् ३आवरणावरणप्रविभक्तिनामकम् अष्टमं नाटयविधिम् [८]

१० [७४] तत उक्तक्रमेणैव १चन्द्रास्तमयनप्रविभक्ति–२सूर्यास्तमयनप्रविभक्तियुक्तम् ३अस्तमयनप्रविभक्तिनामकं नवमं नाटयविधिम् [९]

[७५] तत उक्तप्रकारेण १चन्द्रमण्डलप्रविभक्ति–२सूर्यमण्डलप्रविभक्ति–३नागमण्डलप्रविभक्ति–४यक्षमण्डलप्रविभक्ति–५भूतमण्डलप्रविभक्तियुक्तं ६मण्डलप्रविभक्तिनामकं दशमं दिव्यं नाटयविधिम् [१०]

= 'णाम' शब्देन सर्वत्र 'णामं दिव्व णट्टविहं' एतानि पदानि बोध्यानि। ⊖ [ ] एतच्चिह्नान्तर्गत पाठः वि० बा०।

[७६] –उसभमंडलप० च सीहमंडलप० च हयविलंबियं गयवि०○ हयविलसियं गयविलसियं मत्तहय-विलसियं मत्तगजविलसियं मत्तहयवि० मत्तगयवि० दुयविलम्बियं णामं...णट्टविहं उवदंसेंति [११]

[७७] सागरपविभत्तिं च नागरप० च सागर–नागरप० च णाम....उवदंसेंति [१२]

[७८] णंदाप० च चंपाप० च नन्दा–चंपाप० च णामं...उवदंसेंति [१३]

[७९] मच्छंडाप० च मयरंडाप० च जारप० च मारप० च मच्छंडा–मयरंडा–जारा–माराप० च...णामं

---

[७६] तदनन्तरम् उक्तक्रमेण १ऋषभमण्डलप्रविभक्ति–२सिंहमण्डलप्रविभक्ति–३हयविलम्बित–४गजविलम्बित–५हयविलसित––६गजविलसित–७मत्तहयविलसित–८मत्तगजविलसित–९मत्तहयविलम्बित–१०मत्तगजविलम्बितं विलम्बिताभिनयं ११द्रुतविलम्बितं नाम एकादशं नाट्यविधिम् [११]

[७७] तदनन्तरम् १सागरप्रविभक्ति–२नागरप्रविभक्तिअभिनयात्मकं ३सागर–नागरप्रविभक्तिनाम द्वादशं नाट्यविधिम् [१२]

[७८]ततो १ नन्दाप्रविभक्ति–२ चम्पाप्रविभक्त्यात्मकं नन्दा–३ चम्पाप्रविभक्तिनाम त्रयोदशं नाट्यविधिम् [१३]

[७९] ततो १ =मत्स्याण्डकप्रविभक्ति–२ मकराण्डकप्रविभक्ति–३ जारप्रविभक्ति–४ मारप्रविभक्तियुक्तं ५ =मत्स्याण्डक–मकरा-

---

- अत्र मूलपाठसर्वप्रतिषु विवरणयुक्तमूलपाठादर्शे च 'उसभललियविक्कत सीहललियविक्कत हयविलंबिय' एवं पाठो लभ्यते परन्तु अत्र मूले तु विवरणानुसारी पाठक्रमो रक्षितः। ○ 'वि' पदेन 'विलम्बितम्' अवगन्तव्यम्। = पृ० ८३ पं० ५–६।

उवदंसेंति [१४]

[८०] * 'कं' त्ति ककारप० च 'खं' त्ति खकारप० च 'गं' त्ति गकारप० च 'घ' त्ति घकारप० च 'ङं' त्ति ङकारप० च ककार-खकार-गकार-घकार-ङकारप० च णामं...उवदंसेंति [१५] एवं चकारवग्गो पि [१६] टकारवग्गो वि [१७] तकारवग्गो वि [१८] पकारवग्गो वि [१९]

ण्डक-जार-मारप्रविभक्तिनाम चतुर्दशं नाट्यविधिम् [१४]

[८०] तदनन्तरम् क्रमेण १ 'क' इति ककारप्रविभक्तिः २ 'ख' इति खकारप्रविभक्तिः ३ 'ग' इति गकारप्रविभक्तिः ४ 'घ' इति घकारप्रविभक्तिः ५ 'ङ' इति ङकारप्रविभक्तिः इत्येवं ६क्रमभाविककारादिप्रविभक्तिअभिनयात्मकं ७ ककार-खकार-गकार-घकार-ङकारप्रविभक्तिनामकं पञ्चदशं दिव्यं नाट्यविधिम् [१५] एवं ८चकार-छकार-जकार-झकार-ञकारप्रविभक्तिनामकं षोडशं दिव्यं नाट्यविधिम् [१६] ९ टकार-ठकार-डकार-ढकार-णकारप्रविभक्तिनामकं सप्तदशं दिव्यं नाट्यविधिम् [१७] १० तकार-थकार-दकार-धकार-नकारप्रविभक्तिनामकम् अष्टादशं नाट्यविधिम् [१८] ११पकार-फकार-बकार-भकार-मकारप्रविभक्तिनामकम् एकोन-

* ब्राह्मीलिपिगतः ककारः + एवंसस्थितः, अत्र च नर्तका देवादयः तेन 'क' सत्काकारेण स्थित्वा नृत्य कृतवन्त इत्यभिप्रायो गम्यते । एवं सर्वत्र 'ख' आदिष्वपि वाच्यम् । अत्र नर्तनप्रकारे 'अ'कार-'इ'कार-इत्यादयः स्वरा नोल्लिखिताः तथा व्यञ्जनाक्षरेष्वपि वर्गीया एव वर्णा दर्शिताः, 'य'कार-'र'कार-'ल'कार-'व'कार-'स'कार-'ह'कारादयो वर्णा न दर्शिताः तत्र किमपि ऐतिहासिकं कारणं वा न इति चिन्तनीयम् । अथवा देवानां लिपौ ये वर्णाः ते एव अत्र दर्शिताः इत्यपि चिन्तनीयम् ।

[८१] असोयपल्लवप० च अंबपल्लवप० च जंबूपल्लवप० च कोसंबपल्लवप० च -पल्लवप० च णामं...उवदंसेंति [२०]

[८२]पउमलयाप० जाव [पृ० १८ पं० २-३] सामलयाप० च ⊖लयाप० च णामं...उवदंसेंति [२१]

[८३] दुयणामं...उवदंसेंति [२२] विलंबियं णामं...उव० [२३] दुयविलंबियं णामं...उव० [२४] अंचियं [२५] रिभियं [२६] अंचियरिभियं [२७]

---

विंशतितमं दिव्यं नाट्यविधिम् [१९]

[८१] ततः १अशोकपल्लवप्रविभक्ति-२ आम्रपल्लवप्रविभक्ति-३ जम्बूपल्लवप्रविभक्ति-४ कोशम्बपल्लवप्रविभक्तिअभिनयात्मकं ५ पल्लवप्रविभक्तिनामकं विंशतितमं दिव्यं नाट्यविधिम् [२०]

[८२] तदनन्तरम् १ पद्मलताप्रविभक्ति-+नागलताप्रविभक्ति-अशोकलताप्रविभक्ति-चम्पकलताप्रविभक्ति-चूतलताप्रविभक्ति-वनलताप्रविभक्ति-वासन्तीलताप्रविभक्ति-कुन्दलताप्रविभक्ति-अतिमुक्तकलताप्रविभक्ति-२श्यामलताप्रविभक्तिअभिनयात्मकं ३ लताप्रविभक्तिनामकम् एकविंशतितमं दिव्यं नाट्यविधिम् [२१]

[८३] तदनन्तरम् १द्रुतं नाम द्वाविंशति8तमं नाट्यविधिम् [२२] ततो २विलम्बितं नाम त्रयोविंशतितमम् [२३] ३ द्रुतविलम्बितं नाम चतुर्विंशतितमम् [२४] ४ अञ्चितं नाम पञ्चविंशतितमम् [२५] ५रिभितं नाम षड्विंशतितमम् [२६] ६अञ्चितरिभितं

---

-पल्लवपल्लवप०-वि० बा० । ⊖लयालयाप०-वि० बा० । + पृ० १८ पं० १० । 8 -तमं वाद्यविधिम्-पा० ४-५ ।

आरभडं [२८] भसोलं [२९] आरभडभसोलं [३०] उप्पयनिवयपवत्तं[१०] 8 संकुचियं[११] पसा=रियं ०रयारइयं [१२]भंतं संभंतं णामं दिव्वं णट्टविहिं उवदंसेंति [३१]

[८४] तए णं ते बहवे देवकुमारा य देवकुमारीओ य समामेव समोसरणं करेंति जाव [पृ० पं०] दिव्वे देवरमणे पवत्ते यावि होत्था। [१]तए णं ते बहवे देवकुमारा य देवकुमारीओ य समणस्स[२] भगवओ महावीरस्स [३]पुव्वभवचरियणिबद्धं च चवण[४]चरियणिबद्धं च संहरण[५]चरियनिबद्धं च जम्मण[६]चरियनिबद्धं च अभिसेअचरियनिबद्धं च बाल[८]भावचरियनिबद्धं च जोव्वणचरियनिबद्धं च कामभोग[१०]चरियनिबद्धं च निक्खमण[११]चरियनिबद्धं च तव[१२]चरणचरियनिबद्धं च

नाम सप्तविंशतितमम् [२७] ७ आरभटं नाम अष्टाविंशतित॰मम् [२८] ८ भसोलं नाम एकोनत्रिंशत्तमम् [२९] ९ आरभटभसोलं नाम त्रिंशत्तमम् [३०] तदनन्तरम् १० उत्पातनिपातप्रसक्तं ११ संकुचितप्रसा*रित ÷ रेचका ! रचितं १२ भ्रान्तसंभ्रान्तं नाम एकत्रिंशत्तमं दिव्यं नाट्यविधिम् उपदर्शयन्ति [३१]

[८४] १तदनन्तरम् च २ श्रमणस्य भगवतो महावीरस्य ३ चरमपूर्वमनुष्यभव-४ चरमच्यवन-५चरमगर्भसंहरण-६चरमभरतक्षेत्रावसर्पिणीतीर्थंकरजन्म-७ अभिषेक-८ चरमबालभाव-९चरमयौवन-१० चरमकामभोग-११चरमनिष्क्रमण-१२ चरमतप-

8-सकुचिय अपसारिय-पा० ३। =-रियं भन्तं णाम-भा० २।-रियं रयारतियत णाम—पा० १। ० इद पद न स्पष्ट प्रतिभाति ततः तदर्थोऽपि नावगम्यते। ॰ -मम् शोभन नाम-भा० २। *-रितखेकरभ्रान्त सं-भा०१।-रितं रेवकरचितं भ्रान्तं-भा० २। ÷ अस्यार्थोऽपि

नाट्यस्य उपसंहारः

=णाणुप्पा[13]यचरियनिबद्धं च तित्थपवत्त[14]णचरिय-परिनिव्वाण[15]चरियनिबद्धं च चरिमचं[16]रियनिबद्धं च णा[17]मं दिव्वं णट्टविहिं उवदंसेंति [३२]

[८५] त[1]ए णं ते ब[2]हवे देवकुमारा य देवकुमारीओ य चउव्वि[3]हं वाइत्तं[4] वा[5]एंति-तं[6] जहा-त[7]तं वि[8]ततं घणं झुंसिरं+।

[८६] तए[1] णं ते बहवे देवकुमारा य देवकुमारियाओ य चउव्वि[2]हं गेयं[3] गायंति[4] तंजहा[5]-उक्खित्तं[6] पा[7]यंतं मंदा[8]यं रोइयावसाणं[9] च।

---

श्वरण-१३ चरमज्ञानोत्पाद- १४ चरमतीर्थप्रवर्तन-१५ चरमपरिनिर्वाणनिबद्धं १६ चरमनिबद्धं १७ नाम द्वात्रिंशत्तमं दिव्यं नाट्यविधिम् उपदर्शयन्ति। [३२]

[८५] १ तदनन्तरम् २ बहवो देवकुमारा देवकुमारिकाश्च नाट्यविधिपरिसमाप्तिमङ्गलभूतं ३ चतुर्विधं ४ वादित्रं ५ वादयन्ति-६ तद्यथा-७ ततम्-मृदङ्ग-पटहादि ८ विततम्-वीणादि ९ घनम्-कंसिकादि १० शुषिरम्-शङ्ख-काहलादि।

[८६] १ तदनन्तरम् २ चतुर्विधं ३ गीतं ४ गायन्ति-५ तद्यथा-६ ×उत्क्षिप्तं प्रथमतः समारभ्यमाणम् ७ पादान्तम्-पादवृद्धम्-वृद्धादि-चतुर्भागरूपपादबद्धम्-इति भावः। ८ मध्यभागे मूर्छनादिगुणोपेततया मन्दं मन्दं घोलनात्मकम् ९ रोचितावसानम्-

---

न सबुद्धः। =मूलपाठ्युक्तेषु आदर्शेषु पा० २ आदर्शे एव 'णाणुप्पायचरियनिबद्ध च' पद दृश्यते परन्तु विवरणानुसारित्वेन अत्र न्यस्तम्।

+'शुषिर' शब्दे आद्य 'श'कारस्य 'झ' कारोच्चारणेन झुसिर। अत्र 'श' कार-झकारयोः 'तालुस्थानीयत्वेन 'श'कारः 'झ'रूपेण परिणत इति कल्पना योग्या [2] शुषिर-सुसिर-सोसरं। × उत्क्षिप्य प्र-पा० ४-५ भा० १।

[८७] तएं णं ते बहवे देवकुमारा य देवकुमारियाओ य चउव्विहं[2] णट्टविहिं[3] उवदंसंति[4]-तंजहा[5]-अंचियं[6] रिभियं आरभडं भसोलं च।

[८८] तएं णं ते बहवे देवकुमारा य देवकुमारियाओ य चउव्विहं[2] अभिणयं[3] अभिणयेंति[4]-तंजहा[5]-दिट्ठंतियं[6] =पाँडितियं सामन्नोविणिवाइयं अंतोमज्झावसाणियं च।

[८९] तए णं ते बहवे देवकुमारा य देवकुमारियाओ य गोयमादियाणं समणाणं निग्गंथाणं दिव्वं देविड्ढिं दिव्व देवजुतिं दिव्वं देवाणुभावं दिव्वं बत्तीसइबद्धं नाडयं उवदंसित्ता समणं भगवंतं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेंति करित्ता वंदंति नमंसंति वंदित्ता नमंसित्ता जेणेव सूरियाभे देवे तेणेव उवागच्छंति उवासित्ता सूरियाभं देवं करयलपरिग्गहियं सिरसावत्तं [पृ०६७ पं० ८] मत्थए अंजलिं कट्टु जएणं विजएणं वद्धावेंति

इति-रोचितं यथोचितलक्षणोपेततया भावितम्-सत्यापितम् इति यावत् अवसानं यस्य तद् रोचितावसानम्।

[८७] १ ततः २ चतुर्विधं ३ नर्तनविधिम् ४ उपदर्शयन्ति-५ तद्यथा-६ अञ्चितम् इत्यादि।

[८८] १ ततः २ चतुर्विधम् ३ अभिनयम् ४ अभिनयन्ति-५ तद्यथा-६ दार्ष्टान्तिकम् ७ प्रात्यन्तिकम् ८ सामान्यतो विनिपातम् ९ लोकमध्यावसानिकम्-इति। एते नर्तनविधयः अभिनयविधयश्च नाट्यकुशलेभ्यो वेदितव्याः।

=पाडियतिय-भा० २ पा० १-२। पाडिय-पा० ३।

सूर्याभः स्वस्थान गतः

वद्धावित्ता एवं आणत्तियं पच्चप्पिणंति।

तए णं से सूरियाभे देवे तं दिव्वं देविड्ढिं दिव्वं देवजुइं दिव्वं देवाणुभावं Oपडिसाहरइ पडिसाहरेत्ता खणेणं जाते एगे एगभूए। तए णं से सूरियाभे देवे समणं भगवंतं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेइ वंदति नमंसति वंदित्ता नमंसित्ता [2]नियगपरिवालसद्धिं संपरिवुडे तमेव दिव्वं जाणविमाणं दुरूहति दुरूहित्ता जामेव दिसिं पाउब्भूए तामेव दिसिं पडिगए।

[९०] 'भंते'[1] त्ति[2] भयवं[3] गोयमे समणं[4] भगवंतं महावीरं वंदति[5] नमंसति वंदित्ता नमंसित्ता एवं[6] वयासी—

[८९] तए णं ते...इत्यादि उपसंहारसूत्रं सुगमम्। नवरम्–१ एकभूतः–अनेकीभूय एकत्वं प्राप्त इत्यर्थः। २निजकपरिवारेण सार्धं संपरिवृतः।

[९०] १ 'भदन्त'। २ इति आमन्त्रणपुरस्सरं ३ भगवान् गौतमः ४ श्रमणं भगवन्तं महावीरं ५ वन्दते नमस्यति वन्दित्वा नमस्यित्वा ६ एवम्–वक्ष्यमाणप्रकारेण अवादीत्—

[पुस्तकान्तरे तु इदं वाचनान्तरं दृश्यते–+'तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स जिट्ठे अन्तेवासी'–इत्यादि–'इंदभूई =नामं अणगारे गोयमसगोत्ते सत्तुस्सेहे समचउरंससंठाणसंठिए वज्जरिसहनारायसंघयणे कणगपुलगनिघसपम्हगोरे उग्गतवे दित्ततवे

O प्रतिसंहरति–प्रतिसंक्षिपति इत्यर्थः। + विवरणकारदर्शितो वाचनाभेदः। = "'नाम' इति प्राकृतत्वात् विभक्तिपरिणामेन 'नाम्ना' इति द्रष्टव्यम् एवमन्यत्रापि यथायोगं भावनीयम्"–राय० विव०।

तत्ततवे महातवे उराले घोरे घोरगुणे घोरतवस्सी घोरबंभचेरवासी उच्छूढसरीरे संखित्तविपुलतेयलेस्से चउदसपुव्वी चउनाणोवगए सव्वक्खरसन्निवाई समणस्स भगवतो महावीरस्स अदूरसामंते उड्ढंजाणू अहोसिरे झाणकोट्ठोवगए संजमेण तवसा अप्पाणं भावेमाणे विहरइ, तए णं से भगवं गोयमे जायसड्ढे जायसंसए जायकोउहल्ले उप्पन्नसड्ढे उप्पन्नसंसए उप्पन्नकोउहल्ले संजायसड्ढे संजायसंसए संजायकोउहल्ले समुप्पण्णसड्ढे समुप्पण्णसंसए समुप्पण्णकोउहल्ले उट्ठाए उट्ठेइ उट्ठाए उट्ठित्ता जेणेव समणे भगवं महावीरे तेणेव उवागच्छति तेणेव उवागच्छित्ता समणं भगवंतं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेति तिक्खुत्तो आयाहिणपयाहिणं करेत्ता वंदति नमसति वंदित्ता नमंसित्ता एवं वयासी'—

अस्य व्याख्या—तस्मिन् काले तस्मिन् समये श्रमणस्य भगवतो महावीरस्य ज्येष्ठ इति प्रथम अन्तेवासी-शिष्यः। अनेन पदद्वयेन तस्य सकलसङ्घाधिपतित्वम्-आवेदयति। 'इन्द्रभूतिः' इति मातापितृकृतं नामधेयम्। अन्तेवासी च किल विवक्षायां श्रावकोऽपि स्यात् अतः तदाशङ्काव्यवच्छेदार्थम् आह—अनगारः-न विद्यते अगारं गृहम् अस्य इति अनगारः अयं च विगीतगोत्रोऽपि संभाव्येत अत आह-गौतमः गोत्रेण गौतमाह्वयगोत्रसमन्वित इत्यर्थः अयं च तत्कालोचितदेहपरिमाणापेक्षया न्यूनाधिकदेहोऽपि स्यात् अत आह-सप्तोत्सेध-सप्तहस्तप्रमाणशरीरोच्छ्रायः अयं च इत्थंभूतो लक्षणहीनोऽपि शङ्क्येत, अतः तदाशङ्कापनोदार्थमाह-समाः शरीरलक्षणशास्त्रोक्तप्रमाणाविसंवादिन्य चतस्रः अस्रयः यस्य तत् समचतुरस्रम्-अस्रयस्त्विह चतुर्दिग्विभागोपलक्षिताः शरीरावयवा द्रष्टव्याः। अन्ये त्वाहुः-"समा अन्यूनाधिकाः चतस्रोऽपि अस्रयो यत्र तत् समचतुरस्रम् तच्च तत् संस्थानं च, संस्थानम् आकारः तच्च वाम-दक्षिणजान्वोः अन्तरम् आसनस्य ललाटोपरिभागस्य चान्तरम् वामस्कन्धस्य दक्षिणजानुनश्च अन्तरम्" इति। अपरे त्वाहुः-"विस्तारोत्सेधयोः समत्वात् समचतुरस्रम् तच्च तत् संस्थानं च-संस्थानम् आकारः तेन संस्थितो व्यवस्थितो यः स तथा।-तत्र नाराचम् उभयतो मर्कटबन्धः ऋषभः तदुपरि वेष्टनपट्टः कीलिका अस्थित्रयस्यापि भेदकम् अस्थि एवंरूपं संहननं यस्य स तथा। तथा कनकस्य-सुवर्णस्य यः पुलकः-लवः तस्य यो निकषः-कषपट्टके रेखारूपः तथा 'पद्म'ग्रहणेन 'पद्मकेसराणि' उच्यन्ते अवयवे समुदायोपचारात् यथा-देवदत्तस्य हस्ताग्ररूपोऽवयवोऽपि देवदत्तः तथा च देवदत्तस्य हस्ताग्रं स्पृष्ट्वा लोको वदति-'स्पृष्टो मया देवदत्तः' इति, कनकपुलकनिकषवत् पद्म-

वच्च यो गौरः स कनकपुलकनिकषपद्मगौर' अथवा कनकस्य यः पुलको द्रवत्वे सति बिन्दुः तस्य निकषो वर्णतः सदृशः कनकपुलकनिकषः तथा पद्मवत्-पद्मकेसरवत् यो गौरः स O पद्मगौरः। अय च विशिष्टचरणरहितोऽपि शङ्कयेत तत आह-उग्रम् अधृष्यं तपः अनशनादि यस्य स तथा यद् अन्येन प्राकृतेन पुंसा न शक्यते चिन्तयितुमपि मनसा तद्विधेन तपसा युक्त इत्यर्थः तथा दीप्तं जाज्वल्यमानदहन इव कर्मवनगहनदहनसमर्थतया ज्वलितं तपो धर्मध्यानादि यस्य स तथा, तप्तं तपो येन स तप्ततपाः एवं हि तेन तपः तप्तं येन सर्वाण्यपि अशुभानि कर्माणि भस्मसात्कृतानि इति महत् प्रशस्तम्-आशंसादोषरहितत्वात्-तपो यस्य स महातपाः तथा उदारः प्रधानः अथवा + उरालो भीष्मः उग्रादिविशिष्टतपःकरणतः पार्श्वस्थानाम्-अल्पसत्त्वानाम् अतिभयानक इति भावः तथा घोरो निर्घृणः परीषहेन्द्रियादिरिपुगणविनाशनमधिकृत्य निर्दय इति यावत् तथा घोरा अन्यैर्दुरनुचरा गुणा मूलगुणादयो यस्य स घोरगुणः तथा घोरैस्तपोभिः तपस्वी घोरतपस्वी घोरं दारुणम् अल्पसत्त्वैर्दुरनुचरत्वात् ब्रह्मचर्यं यत् तत्र वस्तुं शीलं यस्य स तथा 8 उच्छूढम्-उज्झितमिव उज्झितं संस्कारपरित्यागात्-शरीरं येन स उच्छूढशरीरः संक्षिप्ता शरीरान्तर्गतत्वेन ह्रस्वतां गता विपुला विस्तीर्णा अनेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनसमर्थत्वात् तेजोलेश्या विशिष्टतपोजन्यलब्धिविशेषप्रभवा तेजोज्वाला यस्य स तथा चतुर्दश पूर्वाणि विद्यन्ते यस्य-तेनैव तेषां रचितत्वात्-असौ चतुर्दशपूर्वी अनेन तस्य श्रुतकेवलित्वमाह स च अवधिज्ञानादिविकलोऽपि स्यात् अत आह-मति-श्रुत-अवधि-मनःपर्यायज्ञानचतुष्टयसमन्वित. उक्तविशेषणद्वययुक्तोऽपि कश्चिद् न समग्रश्रुतविषयव्यापिज्ञानो भवति चतुर्दशपूर्वविदामपि षट्स्थानपतितत्वेन श्रवणात् अत आह सर्वाक्षरसंनिपाती अक्षराणां संनिपाता. संयोगाः अक्षरसन्निपाताः सर्वे च ते अक्षरसन्निपाताश्च सर्वाक्षरसन्निपाताः ते यस्य ज्ञेयाः स तथा किमुक्तं भवति? या काचिद् जगति पदानुपूर्वी वाक्यानुपूर्वी वा संभवति ताः सर्वा अपि जानातीति एवगुणविशिष्टो भगवान् विनयराशिरिव साक्षात् इति कृत्वा शिष्याचारत्वाच्च श्रमणस्य भगवतो महावीरस्य अदूरसामन्ते विहरति-इति योगः तत्र दूरं विप्रकृष्टम् तत्प्रतिषेधाद् अदूरसामन्तम्-ततो नातिदूरे नातिनिकटे इत्यर्थः किं-

O "ततः पदद्वयस्य कर्मधारयसमासः"-राय० विव०। + 'उरालो' अयं प्राकृतः प्रयोगः। 8 'उच्छढम्' इदमपि प्राकृत पदम्।

विशिष्टः सन् तत्र विहरति ? इत्यत आह–ऊर्ध्वे जानुनी यस्य असौ ऊर्ध्वजानुः अधःशिराः–नोर्ध्वं तिर्यग् वा विक्षिप्तदृष्टिः किन्तु नियतभूभागनियमितदृष्टिः इत्यर्थः ध्यानं धर्मध्यानं शुक्लध्यानं च तदेव कोष्ठः कुशूलो ध्यानकोष्ठः तम् उपगतो ध्यानकोष्ठोपगतः यथा हि कोष्ठके धान्य प्रक्षिप्तम् अविप्रसृतं भवति एवं भगवानपि ध्यानतोऽविप्रकीर्णेन्द्रियान्त करणवृत्तिः इत्यर्थः संयमेन पञ्चाश्रवनिरोधादिलक्षणेन तपसा अनशनादिना 'च'शब्दोऽत्र समुच्चयार्थो लुप्तो द्रष्टव्यः संयम–तपोग्रहणम् अनयोः प्रधानमोक्षाङ्गताख्यापनार्थम् प्राधान्यं च नवकर्मानुपादानहेतुत्वेन तपसश्च पुराणकर्मनिर्जराहेतुत्वेन तथाहि–अभिनवकर्मानुपादानात् पुराणकर्मक्षपणाच्च जायते सकलकर्मक्षयलक्षणो मोक्ष ततो भवति संयम-तपसोर्मोक्षं प्रति प्राधान्यम् इति। आत्मानं वासयन् तिष्ठति। ततो ध्यानकोष्ठोपगतविहरणाद् अनन्तरं भगवान् गौतमो जातश्रद्धादिविशेषणविशिष्टः सन् उत्तिष्ठति–इति योगः तत्र जाता प्रवृत्ता श्रद्धा इच्छा वक्ष्यमाणार्थतत्त्वावगमं प्रति यस्य असौ जातश्रद्धः तथा जातः संशयो यस्य स जातसंशयः संशयो नाम अनवधारितार्थज्ञानम् स चैवम्–'इत्थं नाम अस्य दिव्या देवर्धिर्विस्तृता अभवत् इदानीं सा क्व गता ?' इति तथा जातं कुतूहलं यस्य स जातकुतूहलः जातौत्सुक्य इत्यर्थः यथा–'कथममुमर्थं भगवान् प्ररूपयिष्यति' इति तथा उत्पन्ना प्राग् अभूता सती भूता श्रद्धा यस्य असौ उत्पन्नश्रद्धः अथ 'जातश्रद्धः' इत्येतदेव अस्तु किमर्थम् 'उत्पन्नश्रद्धः' इति प्रवृत्तश्रद्धत्वेनैव उत्पन्नश्रद्धत्वस्य लब्धत्वात् नहि अनुत्पन्ना श्रद्धा प्रवर्तते ? इति, अत्रोच्यते; हेतुत्वप्रदर्शनार्थम् तथाहि–कथं प्रवृत्तश्रद्धः उच्यते यतः उत्पन्नश्रद्धः इति हेतुत्वदर्शनं चोपपन्नम् तस्य काव्यालंकारत्वात् यथा "प्रवृत्तदीपामप्रवृत्तभास्कराम् प्रकाशचन्द्रां वुवुधे विभावरीम्" [ ] इत्यत्र, अत्र हि यद्यपि प्रवृत्तदीपादित्यादेव अप्रवृत्तभास्करत्वम् अवगतम् तथापि अप्रवृत्तभास्करत्वं प्रवृत्तदीपादेर्हेतुतया उपन्यस्तमिति सम्यक्। 'उप्पन्नसड्ढे' 'उप्पन्नसंसए' इति प्राग्वत् तथा 'संजायसड्ढे' इत्यादि पदषट्कं प्राग्वत् नवरम्–इह 'सम्'शब्दः प्रकर्षादिवचनो वेदितव्यः उत्थानम् उत्था–ऊर्ध्ववर्तनम्–तया उत्तिष्ठति। इह 'उट्ठेइ' इत्युक्ते क्रियारम्भमात्रमपि प्रतीयेत यथा 'वक्तु+मुत्तिष्ठति' ततः तद्व्यवच्छेदार्थम् 'उट्ठाए' इत्युक्तम्–उत्थया उत्थाय यस्मिन् दिग्भागे श्रमणो भगवान्

+–मुत्तिष्ठते ततः–पा० ४। –मुपतिष्ठते ततः–पा० ५।

जातसंशयस्य श्रीगौतमस्य प्रश्नः

[९१] प्र०–सूरियाभस्स णं भंते! देवस्स एसा दिव्वा देविड्ढी दिव्वा देवज्जुती दिव्वे देवाणुभावे कहिं[1] गते कहिं[2] अणुप्पविट्ठे ?

[९२] उ०–गोयमा[1]! स[2]रीरं गते [3]सरीरं अणुप्पविट्ठे।

[९३] प्र०–[1]से केणट्ठेणं [2]भंते! [3]एवं वुच्चइ[4] सरीरं[5] गते सरीरं अणुप्पविट्ठे ?

[९४] उ०–गोयमा[1]! से जहा नाम ए कूडा[2]गारसाला

---

महावीरो वर्तते तस्मिन्नेव दिग्भागे उपागच्छति उपागत्य च श्रमणं त्रिकृत्वः–त्रीन् वारान् आदक्षिणप्रदक्षिणीकरोति आदक्षिणप्रदक्षिणीकृत्य वन्दते नमस्यति वन्दित्वा नमस्यित्वा एवम् अवादीत् ]—

[९१] प्र०–१ क्व गतः ? २ तत्र गमनम् अन्तरमनुप्रवेशाभावेऽपि दृष्टम् यथा 'भित्तौ गता धूलिः' इति, एषोऽपि दिव्योऽनुभावः यद्येवं क्वचित् प्रत्यासन्ने प्रदेशे गतः स्यात् ततो दृश्येत न चासौ दृश्यते ततो भूयः पृच्छति–क्व अनुप्रविष्टः–क्व अन्तर्लीनः ? इति भावः

[९२] उ०–भगवान् आह–१ गौतम! २ शरीरं गतः–३ शरीरम् अनुप्रविष्टः।

[९३] प्र०–पुनः पृच्छति–१ अथ केन अर्थेन–केन हेतुना २ भदन्त! ३ एवम् ४ उच्यते ५ 'शरीरं गतः–शरीरम् अनुप्रविष्टः' ?

[९४] उ०–भगवान् आह–१ गौतम! २कूटस्येव–पर्वतशिखरस्येव आकारो यस्याः सा कूटाकारा–यस्या उपरि आच्छादनं शिखराकारं सा कूटाकारा इति भावः कूटाकारा चासौ शाला च कूटाकारशाला यदि वा कूटाकारेण शिखराकृत्या उपलक्षिता शाला

सिया[३] दुहतो लित्ता गुत्ता[६] गुत्तदुवारा[७] णिवाया णिवायगंभीरा, [१०]तीसे णं कूडागारसालाते [११]अदूरसामंते एत्थ णं [१२]महेगे जणसमूहे चिट्ठति, तए णं [१३]से जणसमूहे एगं[१४] महं अब्भवद्दलगं[१५] वा वासवद्दलगं[१६] वा महावायं[१७] वा एज्जमाणं[१८] वा पासंति[१९], पासित्ता तं[२०] ४कूडागारसालं अंतो[२१] अणुप्पविसित्ता[२२] णं चिट्ठइ[२३], से तेणट्ठेणं[२४] गोयमा[२५]! एवं वुच्चति–'सरीरं अणुप्पविट्ठे'।

[९५] प्र०–कहिं[१] णं भंते! सूरियाभस्स[३] देवस्स सूरियाभे[३] नामं विमाणे पन्नत्ते[४]?

---

कूटाकारशाला ३ स्यात् ४बहिर् अन्तश्च ५ गोमयादिना लिप्ता ६ गुप्ता बहिः प्राकारावृता ७ गुप्तद्वारा द्वारस्थगनात् यदि वा गुप्तद्वारा केषांचिद् द्वाराणां स्थगितत्वात् केषांचिद् वा अस्थगितत्वात् इति। ८ निवाता वायोरप्रवेशात् ९ किल महद् गृहं निवातं प्रायो न भवति तत आह–निवातगम्भीरा–निवाता सती विशाला इत्यर्थः ततः १० तस्याः कूटाकारशालायाः ११ अदूरसामन्ते–न अतिदूरे निकटे वा प्रदेशे १२ महान् एकः–अन्यतरः जनसमूहः तिष्ठति १३ स च १४ एकं महत् १५ अभ्ररूपं वार्दलम्–अभ्रवार्दलम्–धारानिपातरहितं संभाव्यवर्षं वार्दलम् इत्यर्थः १६ वर्षप्रधानं वार्दलकम्–वर्षवार्दलकम्–वर्षं कुर्वत् वार्दलकम् १७ महावातं वा १८ आयान्तम्–आगच्छन्तम् १९पश्यति दृष्ट्वा २०तस्याः कूटाकारशालायाः २१अन्तरम् ततः २२अनुप्रविश्य २३तिष्ठति एवं सूर्याभस्यापि देवस्य सा तथा विशाला दिव्या देवद्युतिः दिव्यो देवानुभावः शरीरम् अनुप्रविष्टः। २४अनेन कारणेन २५गौतम! एवम् उच्यते।

[९५] प्र०–भूयो गौतमः पृच्छति–१ क्व २ सूर्याभस्य देवस्य सूर्याभं विमानं ४प्रज्ञप्तम्?

---

४ "द्वितीया षष्ठ्यर्थे"–राय० विव०।

[९६] उ०–[1]गोयमा ! [2]जंबुद्दीवे दीवे [3]मंदरस्स पव्वयस्स [4]दाहिणेणं [5]इमीसे रयणप्पभाए पुढवीए [6]बहुसमरम-णिज्जातो भूमिभागातो [7]उड्ढं [8]चंदिम-सूरिय-गहगण-नक्खत्त-तारारूवाणं [9]बहूइं जोअणसयाइं एवं-[10]सहस्साइं-[11]सयसहस्साइं ×[12]बहुईओ जोअणकोडीओ जोअणसयकोडीओ जोअणसहस्सकोडीओ बहुईओ जोअणसयसहस्स-कोडीओ [13]बहुईओ जोअणकोडाकोडीओ [14]उड्ढं दूरं [15]वीतीवइत्ता [16]एत्थ णं [17]सोहम्मे नामं कप्पे पन्नत्ते पाईण[18]पडीणायते उदीणदाहिणवित्थिण्णे [19]अद्धचंदसंठाणसंठिते [20]अच्चिमालिभासरासिवण्णाभे [21]

[९६] प्र०–भगवान् आह–१ गौतम ! अस्मिन् २ जम्बूद्वीपे यो ३ मन्दरपर्वतः तस्य ४ दक्षिणतः ५ अस्या रत्नप्रभायाः पृथिव्याः ६ बहुसमरमणीयात् भूमिभागात् ७ ऊर्ध्वं ८ चन्द्र-सूर्य-ग्रह-नक्षत्र-तारारूपाणामपि पुरतः ९ बहूनि योजनशतानि ततो बुद्धया बहुबहुतरोल्लङ्घनेन १०बहूनि योजनसहस्राणि एवमेव ११बहूनि योजनशतसहस्राणि एवमेव च १२ बह्वीर्योजनकोटीः एवमेव च १३बह्वीर्योजनकोटीकोटीः १४ ऊर्ध्वम् १५ उत्प्लुत्य १६ अत्र सार्धरज्जुप्रमाणे प्रदेशे १७ सौधर्मो नाम कल्पः प्रज्ञप्तः स च १८ =प्राचीनाऽपाचीनायतः पूर्वापरायत इत्यर्थः १९ उदग्दक्षिणविस्तीर्णः २० अर्धचन्द्रसंस्थानसंस्थितः द्वौ हि सौधर्म-ईशानौ देवलोकौ समुदितौ परिपूर्णचन्द्रमण्डलसंस्थानसंस्थितौ तयोश्च मेरोर्दक्षिणवर्ती सौधर्मकल्पः उत्तरवर्ती ईशानकल्पः ततो भवति सौधर्मकल्पः अर्धचन्द्रसंस्थानसंस्थितः २१ *अर्चीनि किरणानि तेषां माला अर्चिमाला सा अस्य अस्ति-इति अर्चिमाली-किरणमालासंकुल इत्यर्थः ।

'सूर्याभस्य विमानं क्व ?' इति श्रीगौतम प्रश्नस्य उत्तरम्

× बहुगीतो जो-भा० १। =प्राचीनोपाचीना-पा० ४-५। * अर्चींषि-भा० २। "अर्चिस्-अर्ची सन्तेदन्तौ"-शब्दरत्नाकर० का० ४ श्लो० ११५।

असंखेज्जाओ[22] जोअणकोडाकोडीओ[23] आयामविक्खंभेणं[24] असंखेज्जाओ[25] जोअणकोडाकोडीओ परिक्खेवेणं[26] एत्थ णं सोहम्माणं देवाणं बत्तीसं[27] विमाणवाससयसहस्साइं भवंति[28] इति[29] ÷ मक्खायं[30]। ते[31] णं विमाणा सव्वरयणामया[32] अच्छा जाव[33] पडिरूवा। तेसिं[34] णं विमाणाणं बहुमज्झदेसभाए[35] पंच[36] वडिंसया[37] पन्नत्ता तंजहा–असोगवडिंसए[38] सत्तवण्णवडिंसए[39]

२२ असंख्येयाः २३यो≈जनकोटीकोटीः २४ आयामश्च विष्कम्भश्च ०आयामविष्कम्भम्–तेन आयामेन च विष्कम्भेन चेत्यर्थः २५ असंख्येया योजनकोटीकोटीः २६ परिक्षेपेण–परिधिना। सर्वात्मना रत्नमयः 'यावत्' करणात् 'अच्छे सण्हे घट्ठे' [पृ०१९ पं०५ तथा ८] इत्यादिविशेषणकदम्बकपरिग्रहः तत्र सौधर्मे कल्पे २७ द्वात्रिंशद्विमानशतसहस्राणि २८भवन्ति २९इति ३० आख्यात मया शेषैश्च तीर्थकृद्भिः। ३१तानि च विमानानि ३२सर्वरत्नमयानि–सामस्त्येन रत्नमयानि अच्छानि आकाशस्फटिकवत् अतिनिर्मलानि अत्रापि ३३ 'यावत्' करणात् 'सण्हा लण्हा घट्ठा नीरया' [पृ० १९ पं० ८] इत्यादि विशेषणजातं द्रष्टव्यम् तच्च प्रागेव अनेकशो व्याख्यातम्। ३४ तेषां विमानानां ३५ बहुमध्यदेशभागे त्रयोदशप्रस्तटे सर्वत्रापि विमानावतंसकानां स्वस्वकल्पचरमप्रस्तटवर्तित्वात् ३६ पञ्च ३७ विमानावतंसकाः प्रज्ञप्ताः तद्यथा–३८ अशोकावतंसकः–अशोकावतंसकनामा स च पूर्वस्यां दिशि ततो दक्षिणस्यां ३९ सप्तपर्णाव-

÷–मे+अक्खायं=मक्खाय। ˘ "सूत्रे ○ पुस्त्व प्राकृतत्वात्"–राय० विव०। ≈–जनकोटीः–पा० ५–४ भा० १। ०"समाहारो द्वन्द्वः"–राय० विव०।

○ विमानशब्दस्य पुस्त्वम्।

रायपसेणइयं।

॥१५४॥

चंपगवडिंसए[40]* चूतवडिंसए[41] मज्झे सोधम्मवडिंसए[42] ते[43] णं वडिंसगा सव्वरयणामया[44] अच्छा जाव[45] पडिरूवा। तस्स[46] णं सोधम्मवडिंसगस्स महाविमाणस्स पुरत्थिमेणं[47] तिरियं[48] असंखेज्जाइं[49] जोयणसयसहस्साइं वीइवइत्ता[50] एत्थ[51] णं सूरियाभस्स[52] देवस्स सूरियाभे[53] विमाणे पण्णत्ते +अद्धतेरस[54] जोयणसयसहस्सा आयाम[55]विक्खंभेणं ○अउणयालीसं[56] च सयसहस्साइं बावन्नं[57] च सहस्साइं अट्ठ[58] य अडयालजोयणसते परिक्खेवेणं[59]।

तंसकः पश्चिमायां ४० चम्पकावतंसकः उत्तरस्यां ४१ चूतावतंसकः मध्ये ४२ सौधर्मावतंसकः ४३ तेऽपि पञ्चापि विमानावतंसकाः ४४ सर्वरत्नमयाः 'अच्छा जाव पडिरूवा' इति ४५ 'यावत्' करणात् अत्रापि 'सण्हा घट्ठा मट्ठा' इत्यादि [पृ० १९ पं० ५–८] विशेषणजातम् अवगन्तव्यम्। ४६तस्यैव सौधर्मावतंसकस्य ४७पूर्वस्यां दिशि ४८तिर्यक् ४९ असंख्येयानि योजनशतसहस्राणि ५०व्यतिव्रज्य–अतिक्रम्य ५१ अत्र ५२सूर्याभस्य देवस्य ५३ सूर्याभं नाम विमानं प्रज्ञप्तम् ५४ अर्धं त्रयोदशं येषां तानि अर्धत्रयोदशानि–सार्धानि द्वादश–इत्यर्थः–योजनशतसहस्राणि ५५ आयामविष्कम्भेन च ५६ ×एकोनचत्वारिंशत् योजनशतसहस्राणि ५७ द्विपञ्चाशत् सहस्राणि ५८ अष्टौ च योजनशतानि अष्टचत्वारिंशानि–अष्टाचत्वारिंशदधिकानि–३९५२८४८ ≡किञ्चिद्विशेषाधिकानि ५९ परिक्षेपेण

*–ए भूतवडेंसए–भा० १। –ए भूयगवडिसते–भा० २। + अतो तेरसयसहस्साइं आयामविक्खंभेण बायालीसं च सयसहस्साइं अट्ठ य अड–पा० १। ○अउणयालीसं च सयसहस्साइं अट्ठ य अडयालजोयणसते–भा० २। ×एकोनचत्वारिंशत् योजनशतसहस्राणि अष्टौ च योजन–पा० ४–५। ≡अयमर्थो मूले न प्रतिभाति।

[९७] से[1] णं [2]एगेणं पागारेणं सव्वओ[3] समंतो संपरिक्खित्ते [6]से णं पागारे तिण्णि जोयणसयाइं उड्ढं[8]-उच्चत्तेणं, [9]मूले एगं जोयणसयं विक्खंभेणं, [11]मज्झे [12]पन्नासं जोयणाइं विक्खंभेणं उप्पिं[13] [14]पणवीसं जोयणाइं विक्खंभेणं। [16]मूले वित्थिण्णे [17]मज्झे संखित्ते [18]उप्पिं तणुए-[19]गोपुच्छसंठाणसंठिए [20]सव्वरयणामए अच्छे जाव पडिरूवे [21]से णं पागारे

परिधिना "ͽ विक्खम्भवग्ग दहगुण करणी वट्टस्स परिरओ =होइ" [ ] इति करणवशात् स्वयम् आनेतव्यं सुगमत्वात्।

[९७] १ तद् विमानम् २ एकेन प्राकारेण ३ सर्वतः सर्वासु दिक्षु ४ समन्ततः सामस्त्येन ५ परिक्षिप्तम्। ६ स प्राकारः ७ त्रीणि योजनशतानि ८ ऊर्ध्वम्-उच्चैस्त्वेन, ९ मूले एकं योजनशतं १० विष्कम्भेन, ११ मध्यभागे १२ +पञ्चाशत्, मूलाद् आरभ्य मध्यभागं यावत् योजने योजने *योजनत्रिभागस्य विष्कम्भतः त्रुटितत्वात् १३ उपरि मस्तके १४ पञ्चविंशतिर्योजनानि १५ विष्कम्भेण मध्यभागाद् आरभ्य उपरितनमस्तकं यावत् योजने योजने योजनषड्भागस्य विष्कम्भतो हीयमानतया लभ्यमानत्वात् अत एव १६ मूले विस्तीर्णः १७ मध्ये संक्षिप्तः पञ्चाशतो योजनानां त्रुटितत्वात् १८उपरि तनुकः पञ्चविंशतियोजनमात्रविस्तारात्मकत्वात् अत एव १९ गोपुच्छसंस्थानसंस्थितः २० 'सव्वरयणामए' इत्यादि विशेषणजातं प्राग्वत् [पृ० १९ पं० ५-८] स २१ प्राकारः

ͽ "विक्खभ पायगुणिओ परिरओ तस्स गणियपय" इति सम्पूर्णगाथा। =विष्कम्भवर्गः दशगुणः करणी वृत्तस्य परिरयो भवति। विष्कम्भः पादगुणितः परिरयः तस्य गणितपदम्" इति शब्दसंस्कारः। जम्बूद्वीपप्रज्ञप्तिवृत्तौ [पृ० १९ प० ८ वक्ष० १] "परिध्यानयनोपायस्त्वय चूर्णिकारोक्त." इति उल्लिख्य इय गाथा दर्शिता। उपयुक्तगाथार्थस्तु-विष्कम्भस्य वर्गो विधेय स च दशगुणः कार्यः ततः करणीक्रियया गणितं विधेयम् एवरीत्या वृत्तस्य परिरयो ज्ञातु शक्यः। +'विष्कम्भेन' इति शेषः। *-जनविभागस्य वि-भा० २।

[22]णाणाविहपंचवण्णेहिं कविसीसएहिं उपसोभिते तं जहा–[23]कण्हेहिं य नीलेहिं य लोहितेहिं हालिद्देहिं सुक्किल्लेहिं कविसीसएहिं। [24]ते णं कविसीसगा [25]एगं जोयणं [26]आयामेणं [27]अद्धजोयणं विक्खंभेणं [28]देसूणं जोयणं [29]उड्ढं उच्चत्तेणं *[30]सव्वरयणामया अच्छा जाव पडिरूवा।

[९८] सूरियाभस्स णं विमाणस्स [1]एगमेगाए बाहाए [2]दारसहस्सं दारसहस्सं भवतीति =मक्खायं, [3]ते णं दारा पंच [4]जोयणसयाइं उड्ढं उच्चत्तेणं [5]अड्ढाइज्जाइं जोयणसयाइं विक्खंभेणं [6]तावइयं चेव पवेसेणं सेया [7] वर[8]कणगथूभियागा [9]ईहामियउसभतुरगणरमगरविहगवालगकिन्नररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्ता खंभुग्गय-

२२नानाविधानि च तानि पञ्चवर्णानि च नानाविधपञ्चवर्णानि तैः नानाविधत्वं च पञ्चवर्णापेक्षया द्रष्टव्यम् कृष्णादिवर्णतारतम्यापेक्षया वा २३ पञ्चवर्णत्वमेव प्रकटयति–'कण्हेहिं' इत्यादि। २४ तानि कपिशीर्षकाणि प्रत्येकं २५ योजनमेकम् २६ आयामतो दैर्घ्येण २७ अर्धं योजनं विष्कम्भेण २८ देशोनयोजनम्–२९ उच्चैस्त्वेन ३०'सव्वरयणामया' इत्यादि विशेषणजातं प्राग्वत् [पृ०१९ पं० ५–८]।

[९८] १ एकैकस्यां बाहायां २ द्वारसहस्रमिति सर्वसङ्ख्यया चत्वारि §द्वारसहस्राणि, ३ तानि च द्वाराणि प्रत्येकं ४ पञ्च योजनशतानि ऊर्ध्वम्–उच्चैस्त्वेन ५ अर्धतृतीयानि योजनशतानि विष्कम्भतः ६ अर्धतृतीयान्येव योजनशतानि प्रवेशतः तानि च द्वाराणि ≈सर्वाण्यपि ७श्वेतानि–श्वेतवर्णोपेतानि बाहुल्येन अङ्करत्नमयत्वात्। ८ वरकनका–वरकनकमयी स्तूपिका–शिखरं येषां तानि तथा, ९ 'ईहामिग...सस्सिरीयरूवा' इति विशेषणजातं यानविमानवद् भावनीयम् [पृ० ७६ पं० २–४ तथा पं० ६–१२]

* सव्वमणिमया–भा० १–२ वि० बा०। = पृ० १५३ – टिप्पण। § द्वादश–पा० ५। ≈ सर्वाण्युपरि श्वे–भा० २।

वरवयरवेइया परिगयाभिरामा विज्जाहरजमलजुयलजंतजुत्ता विव अच्चीसहस्समालणीया रूवगसहस्सकलिया भिसमाणा भिब्भिसमाणा चक्खुल्लोयणलेसा सुहफासा ससिरीयरूवा। वंन्नो दाराणं तेसिं होइ–तंजहा–वइ[11]○रामया णिम्मा रिट्ठामया[12] पइट्ठाणा वेरुलियमया[13] खंभा जायरूवोवचियपवरपंचवन्नमणिरयणकोट्टिमतला हंसग[14]ब्भमया एलुया गोमेज्जमया[15] इंदकीला लोहियक्खमतीतो[16] चेडाओ जोइरसमया[17] उत्तरंगा लोहियक्खमईओ[18]

१० तेषां द्वाराणां वर्णः–स्वरूपव्यावर्णनम्–अयं भवति, तमेव कथयति–तद्यथा–इति ११नेमा नाम द्वाराणां भूमिभागाद् ऊर्ध्वं निष्क्रामन्तः प्रदेशाः ते सर्वे वज्रमया–वज्ररत्नमयाः, १२ रिष्टमयानि–रिष्टरत्नमयानि प्रतिष्ठानानि–मूलपादाः १३ वैडूर्यरत्नमयाः स्तम्भाः जातरूपेण–सुवर्णेन उपचितैः–युक्तैः प्रवरैः–प्रधानैः पञ्चवर्णैर्मणिभिः–चन्द्रकान्तादिभिः रत्नैः–कर्केतनादिभिः कुट्टिमतलं–बद्धभूमितलं येषां ते तथा १४ हंसगर्भमया–हंसगर्भाख्यरत्नमया एलुका–= देहल्यः इति १५ गोमेज्जकरत्नमया इन्द्रकीलाः १६ * लोहिताक्षररत्नमय्यो +द्वारशाखाः १७ द्वारस्योपरि तिर्यग्व्यवस्थितमङ्गम्–उत्तरङ्गं= तानि ज्योतीरसमयानि–ज्योतीरसाख्यरत्नात्मकानि १८लोहि-

○ 'वज्र' इत्यस्य 'वजिर'–'वइर' इति प्राकृतम् उच्चारणम् 'वइरमया' इति वक्तव्ये 'वइरामया' इति "'वज्र' शब्दस्य दीर्घत्वं प्राकृतत्वात्" एवम् अन्यत्रापि द्रष्टव्यम्" –राय० वि०। – भाषायाम् 'डेलि' इति प्रसिद्धम्। ज्ञाताधर्मकथासूत्रे मूलपाठे 'देहवलि' शब्दः समागत.–"देहंबलियाए"–पृ० १९९ प्र० प० ११। एतस्य वृत्तौ "देह बलिम्' इति एतस्य आख्यान देहवल्किा ××× अनुस्वारो नैपातिक." पृ० २०० प्र० प० १०। अनयोः देहलि–देहबलिकाशब्दयोः साम्य प्रतिभाति। यत्र स्थित्वा 'देह बलिम्' इति कथ्यते तत् स्थान 'देहबलिका–देहली' इति उचित व्युत्पादनम्। * लोहिताख्यर–विवरणसर्वप्रतिषु। +भाषायाम् 'बारसाख' इति। = 'ओतरग' इति भाषाप्रतीतम्।

सूईओ [19]वयरामया संधी [20]णाणामणिमया समुग्गया [21]वयरामया अग्गला [22]अग्गलपासाया [23]रययामयाओ [23]आवत्तणपेढियाओ [24]अंकुत्तरपासगा [25]निरंतरियघणकवाडा [26]भित्तीसु चेव भित्तिगुलिता छपन्ना तिण्णि होंति [27]गोमाणसिया [28]तत्तिया

ताक्षमय्यो लोहिताक्षरत्नात्मिकाः सूचयः–फलकद्वयसम्बन्धविघटनाऽभावहेतुः पादुकास्थानीयाः १९ वज्रमयाः सन्धयः सन्धिमेलाः फलकानाम्–किमुक्तं भवति?–वज्ररत्नपूरिताः फलकानां सन्धयः, २० समुद्गका इव समुद्गकाः–०सूचिकागृहाणि तानि नानामणिमयानि २१ +अर्गलाः–प्रतीताः २२ अर्गलाप्रासादा यत्रार्गला नियम्यन्ते, आह च *जीवाभिगममूलटीकाकारः–"अर्गलाप्रासादा यत्रार्गला नियम्यन्ते" [ ] इति। एतौ द्वौ अपि वज्ररत्नमयौ २३ आवर्त्तनपीठिका नाम यत्रेन्द्रकीलको भवति, उक्तं च विजयद्वारचिन्तायां ×जीवाभिगममूलटीकाकारेण–"आवर्त्तनपीठिका यत्रेन्द्रकीलको भवति" [ ] इति। २४ अङ्का–अङ्करत्नमया उत्तरपार्श्वा येषां द्वाराणां तानि अङ्कोत्तरपार्श्वकानि २५ निर्गता अन्तरिका लघ्वन्तररूपा येषां ते निरन्तरिका अत एव घना–निरन्तरिका घनाः कपाटा येषां द्वाराणां तानि निरन्तरिकघन–कपाटानि २६ तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोः भित्तिषु –भित्तिगताः भित्तिगुलिकाः–पीठकस्थानीयाः Oतिस्रः षट्पञ्चाशत्प्रमाणा भवन्ति २७ गोमनस्यः शय्याः २८ तावन्मात्राः षट्पञ्चा-

२३ रजतमय्यः। ० 'शूतिकागृहाणि' विवरणसर्वप्रतिषु। + 'आगळियो' भाषा। * प्रस्तुतविवरणकारेणैव श्रीमलयगिरिसूरिणा जीवाजीवाभिगमसूत्रस्य विवरण कृतम् स तत्रापि एवमेव उल्लिखति–"आह च मूलटीकाकारः अर्गलाप्रासादा यत्रार्गला नियम्यन्ते"–जीवा० वि० पृ० २०४ प० ६। × जीवा० वि० पृ० २०४ पं० ७। O –ति ष पञ्चाशत् त्रिकप्रमाणा–पा० ५। त्रिषट्पञ्चाशत्–त्रिकप्रमाणा–भा० १।

[३१]णाणामणिरयणवालरूवगलीलट्ठिअसालभंजियागा [३०]वयरामया कूडा [३१]रययामया उस्सेहा [३२]सव्वतवणिज्जमया उल्लोया णाणामणिरयणजालपंजरमणिवंसगलोहियक्खपडिवंसगरययभोमा [३४]अंकामया पक्खा पक्खबाहाओ [३५]जोईरसामया वंसा वंसकवेल्लुयाओ

शत्रिकसंख्याका इत्यर्थः इदं द्वारविशेषणमेव, २९ नानामणिरत्नानि–नानामणिरत्नमयानि व्यालरूपकाणि लीलास्थितशालभञ्जिकाश्च लीलास्थितपुत्रिका येषु तानि तथा ३०कूटो४–माडभाग उच्छ्रयः–शिखरम्। आह च जीवाभिगममूलटीकाकृत्–"-कूटो माडभागः उच्छ्रयः शिखरम्" [ ] इति, नवरमत्र शिखराणि तेषामेव माडभागानां सम्बन्धीनि वेदितव्यानि, द्वारशिखराणामुक्तत्वात् वक्ष्यमाणत्वाच्च, ३२ उल्लोका–उपरिभागाः सर्वतपनीयमयाः–सर्वात्मना तपनीयरूपसुवर्णविशेषमयाः ३३ मणयो–मणिमया वंशा येषु तानि मणिमयवंशकानि लोहिताक्षाणि–लोहिताक्षमयाः प्रतिवंशा येषु तानि लोहिताक्षप्रतिवंशकानि रजता–रजतमयी भूमिर्येषां तानि रजतभूमानि× मणिवंशकानि लोहिताक्षप्रतिवंशकानि रजतभूमानि नानामणिरत्नानि–नानामणिरत्नमयानि जालपञ्जराणि–गवाक्षापरपर्यायाणि येषु *तानि तथा, ३४अङ्को–रत्नविशेषस्तन्मयाः पक्षास्तदेकदेशभूताः पक्षबाहवोऽपि तदेकदेशभूता एवाङ्कमय्यः, आह च –जीवाभिगममूलटीकाकृत्–"अङ्कमयाः पक्षास्तदेकदेशभूता एवं पक्षबाहवोऽपि द्रष्टव्याः" [ ] इति, ३५

४ "वज्रमयः...कूडो माडभागः ३१ रजतमयः उत्सेधः–शिखरम्" -जीवा० वि० पृ० २०४ पं० १३। -जीवा० वि० पृ० २०४ प०१४।
× "प्राकृतत्वात् समासान्तः"–राय० वि०। *"पदानामनन्वयोपनिपातः प्राकृतत्वात्"–राय० वि०। -जीवा० वि० पृ० १८० पं० ८।

रयया[३६]मईओ पट्टियाओ जाय[३७]रूवमईओ ओहाडणीओ वइरा[३८]मईओ उवरिपुञ्छणीओ सव्व[३९]सेयरययामये छायणे अंक[४०]मयकणगकूडतवणिज्जथूभियागा सेया[४१] संख[४२]तलविमलनिम्मलदधिघणगोखीरफेणरययणिगरप्पगासा तिल[४३]गरयणद्धचंदचित्ता

ज्योतीरसं नाम रत्नं तन्मया वंशाः–महान्तः पृष्ठवंशाः महतां पृष्ठवंशानामुभयतस्तिर्यक् स्थाप्यमाना वंशाः ○कवेल्लुकानि प्रतीतानि ३६ रजतमय्यः पट्टिकाः–वंशानामुपरि कम्बास्थानीयाः ३७ जातरूपं–सुवर्णविशेषस्तन्मय्यः अवघाटिन्यः आच्छादनहेतुकम्बोपरिस्थाप्यमानमहाप्रमाणकिलिञ्चस्थानीयाः ३८ वज्रमय्यो–वज्ररत्नात्मिका अवघाटनीनामुपरि पुञ्छन्यो–निबिडतराच्छादनहेतुश्लक्ष्णतरतृणविशेषस्थानीयाः, उक्तं च +जीवाभिगममूलटीकाकारेण–"ओहाडणी हारग्रहणं ? महत् क्षुल्लकं च पुञ्छनी" [ ] इति। ३९ सर्वश्वेतं रजतमयं पुञ्छनीनामुपरि –कवेल्लुकानामध आच्छादनम् ४० अङ्कमयानि बाहुल्येनाङ्करत्नमयानि पक्ष–पक्षबाह्वादीनामङ्करत्नात्मकत्वात् कनकानि कनकमयानि कूटानि–महान्ति शिखराणि येषां तानि कनककूटानि तपनीयाः–तपनीयस्तूपिकानि४ एतेन यत् प्राक् सामान्येन उत्क्षिप्तम्–'सेया वरकणगथूभियागा' [पृ० १५६ पं० ५] इति तदेव प्रपञ्चतो भावितमिति। सम्प्रति तदेव श्वेतत्वमुपसंहारव्याजेन भूय उपदर्शयति–४१ श्वेतानि, ४२ श्वेतत्वमेवोपमया द्रढयति–विमलं विगतमलं यत् शङ्खतलं–शङ्खस्योपरितनो भागो यश्च निर्मलो दधिघनः घनीभूतं दधि गोक्षीरफेनो रजतनिकरश्च तद्वत् प्रकाशः–प्रतिभासो येषां तानि तथा ४३ तिलकरत्नानि

○हिन्दीभाषायाम् 'कवलु' शब्देन प्रतीतानि गुजरातीभाषायाम् 'नलिया' शब्दवाच्यानि। +जीवा० वि० पृ० १८० पं० १४। तत्र 'हार' 'स्थाने' हीरशब्दः। अस्य 'हार' इत्यशस्य सम्पूर्णो भावो नावगतः। – कवेल्लुका–भा० २। ४ततः पदत्रयस्यापि कर्मधारयः"–राय०वि०।

रायपसेण-
इयं।

नाणा[४४]मणिदामालंकिया अंतो[४५] बहिं च सण्हा तवणिज्ज[४६]वालुयापत्थडा सुहफासा[४७] सस्सिरीयरूवा[४८] पासाईया[४९] दरिसणिज्जा अभिरूवा पडिरूवा।

[९९] तेसिं णं दाराणं उभओ[२] पासे दुहओ[३] निसीहियाए सोलस[४] सोलस चंदणकलसपरिवाडीओ पन्नत्ताओ, ते[५] णं चंदणकलसा वरकमलपइट्ठाणा[६] सुरभिवरवारि[७]पडिपुण्णा चंदणकयचच्चागा[८] आविद्ध[९]कंठेगुणा

पुण्ड्रविशेषास्तैरर्द्धचन्द्रैश्च चित्राणि–नानारूपाणि तिलकरत्नार्द्धचन्द्रचित्राणि, क्वचित् ≈'सण्हतलविमलनिम्मलदहिघणगोखीरफेणरययनियरप्पगासद्धचंदचित्ताइं' इति पाठः, तत्र पूर्ववत् पृथक् पृथक् व्युत्पत्तिं कृत्वा पश्चात् पदद्वयस्य कर्मधारयः, ४४ नानामणयो–नानामणिमयानि दामानि–मालास्तैरलङ्कृतानि नानामणिदामालङ्कृतानि ४५ अन्तर्बहिश्च श्लक्ष्णानि–श्लक्ष्णपुद्गलस्कन्धनिर्मापितानि ४६ तपनीयाः–तपनीयमय्यो या *वालुकाः–सिकतास्तासां प्रस्तटः–प्रस्तरो येषु तानि तथा ४७ सुखः–सुखहेतुः स्पर्शो येषु तानि सुखस्पर्शानि ४८ सश्रीकरूपाणि ४९ प्रासादीयानि [पृ० ११ पं० १२] इत्यादि प्राग्वत्।

[९९] १ तेषां द्वाराणां प्रत्येकम्–२उभयोः पार्श्वयोरेकैकनैषेधिकीभावेन ३द्विधातो द्विप्रकारायां नैषेधिक्याम्, नैषेधिकी–निषीदनस्थानम्। आह च [४]जीवाभिगमसूलटीकाकृत्–"नैषेधिकी निषीदनस्थानम्" [ ] इति, प्रत्येकं ४ षोडश षोडश चन्दनकलशपरिपाट्यः प्रज्ञप्ताः, ५ ते च चन्दनकलशा ६ वरं–प्रधानं यत् कमलं तत् प्रतिष्ठानम्–आधारो येषां ते वरकमलप्रतिष्ठानाः, तथा ७सुरभिवरवारिप्रतिपूर्णाः ८ चन्दनकृतचर्चाकाः–चन्दनकृतोपरागाः ९ आविद्धः–आरोपितः कण्ठे गुणो–रक्तसूत्ररूपो येषां ते आवि-

≈विवरणकारदर्शितं पाठान्तरम्। * भाषायाम् 'वाळ' वा 'वेळू' इति। [४] जीवा० वि० पृ० २०५ पं० ४।

[10]पंउमुप्पलपिहाणा सव्वरयणा[11]मया अच्छा जाव पडिरूवगा मह[12]या मह[13]याइंदकुंभसमाणा प[14]न्नत्ता स[15]मणाउसो!।

[१००] तेसिं[1] णं दाराणं उभ[2]ओ पासे दु[3]हओ णिसीहियाए सो[4]लस सोलस णाग[5]दन्तपरिवाडीओ पन्नत्ताओ, ते णं णागदंता मुत्ता[6]जालंतरुसियहेमजालगवक्खजाल[7]खिंखिणीघंटाजालपरिक्खित्ता अब्भु[8]ग्गया अभि[9]णिसिट्ठा तिरि[10]यंसुसंपरिग्गहिया

द्ध*कण्ठेगुणाः, १० पद्ममुत्पलं च यथायोगं पिधानं येषां ते पद्मोत्पलपिधानाः ११ 'सव्वरयणामया' यावत् 'पडिरूवगा' इति विशेषणकदम्बकं प्राग्वत् [पृ० १९ पं० ८] १२ अतिशयेन महान्तः १३ महेन्द्रकुम्भसमानाः–कुम्भानामिन्द्र =इन्द्रकुम्भः महांश्चासौ इन्द्रकुम्भश्च तस्य समाना महेन्द्रकुम्भसमानाः–महाकलशप्रमाणाः १४ प्रज्ञप्ताः हे १५ श्रमण! हे आयुष्मन्।

[१००] १ तेषां द्वाराणां प्रत्येकम्–२उभयोः पार्श्वयोरेकैकनैषेधिकीभावेन या ३ द्विधा नैषेधिकी तस्यां प्रत्येकं ४ षोडश षोडश ५ नागदन्तपरिपाट्यः प्रज्ञप्ताः, =नागदन्ता–अंकुटकाः, ६ ते च नागदन्ता ७ मुक्ताजालानामन्तरेषु यानि उत्सृतानि–लम्बमानानि हेमजालानि–सुवर्णमयदामसमूहा यानि च गवाक्षजालानि–गवाक्षाकृतिरत्नविशेषमालासमूहा यानि च किङ्किणीघण्टाजालानि–क्षुद्रघण्टासमूहास्तै परिक्षिप्ताः सर्वतो व्याप्ताः ८अभिमुखमुद्गताः अभ्युद्गताः–अग्रिमभागे मनाक् उन्नता इति भावः ९अभिमुखं–बहिर्भागाभिमुखं निसृष्टा–निर्गता अभिनिसृष्टाः १०तिर्यक् भित्तिप्रदेशैः सुष्ठु अतिशयेन सम्यक्–मनागप्यचलनेन परिगृहीताः सुसंपरिगृहीताः,

* " 'कण्ठेकाल'वत् सप्तम्या अलुक्"–राय० वि०। – "राजदन्तादिदर्शनाद् 'इन्द्र' शब्दस्य पूर्वनिपातः"–राय० वि० [पृ०५३ टिप्पण०]

= "नागदन्तकौ नर्कुटकौ अंकुटकौ इत्यर्थः"–जीवा० वि० पृ० २०५ पं० ११। भाषाप्रतीत 'नकूचा' शब्देन 'नर्कुटक' शब्दस्य साम्यं

[11]अहेपन्नगद्धरूवा [12]पन्नगद्धसंठाणसंठिया [13]सव्ववयरामया अच्छा जाव [पृ० १९ पं० ५] पडिरूवा [14]महया महया [15]गयदंतसमाणा [16]पन्नत्ता सम[17]णाउसो!। [18]तेसु णं णागदंतएसु [19]बहवे किण्हसुत्तबद्धा [20]वग्घारितमल्लदामकलावा [21]णीलं० लोहित० हालिद्द० सुकिलसुत्तबद्धा वग्घारितमल्लदामकलावा, [22]ते णं दामा [23]तवणिज्जलंबूसगा [24]सुवण्णपयरगमंडिया [25]णाणाविहमणिरयणविविहहारउवसोभियसमुदया [26]जाव सिरीए अईव अईव उवसोभेमाणा

११अधः-अधस्तनं यत् पन्नगस्य सर्पस्यार्धं तस्येव रूपम्-आकारो येषां ते अधःपन्नगार्धरूपाः-अधःपन्नगार्द्धवदतिसरला दीर्घाश्चेति भावः, एतदेव व्याचष्टे-१२पन्नगार्द्धसंस्थानसंस्थिताः अधःपन्नगार्द्धसंस्थानाः १३ सर्वात्मना वज्रमयाः 'अच्छा' इत्यारभ्य 'जाव-पडिरूवा' इति विशेषणजातं प्राग्वत् [पृ० १९ पं० ८] १४ अतिशयेन महान्तो १५ गजदन्तसमानाः-गजदन्ताकाराः १६ प्रज्ञप्ताः हे १७ श्रमण! हे आयुष्मन्!। १८ तेषु नागदन्तेषु १९ बहवः कृष्णसूत्रबद्धाः २० 'वग्घारिय' इति अवलम्बिता माल्यदामकलापाः-पुष्पमालासमूहाः २१ बहवो नीलसूत्रावलम्बितमाल्यदामकलापाः एवं लोहित-हारिद्र-शुक्लसूत्रबद्धा अपि वाच्याः। २२ तानि दामानि २३ तपनीयः-तपनीयमयो लम्बूसगो-दाम्नामग्रिमभागे मण्डनविशेषो येषां तानि तपनीयलम्बूसकानि, पार्श्वतः सामस्त्येन २४ सुवर्ण-प्रतरेण-सुवर्णपत्रकेण मण्डितानि सुवर्णप्रतरमण्डितानि २५ नानारूपाणां मणीनां रत्नानां च ये विविधा-विचित्रवर्णा हाराः-अष्टादशसरिकाः अर्द्धहारा-नव-सरिकास्तैरुपशोभितः समुदायो येषां तानि तथा। २६ 'जाव सिरीए अईव अईव उवसोभेमाणा चिट्ठंति' इति अत्र 'यावत्' करणादेवं परिपूर्णः पाठो द्रष्टव्यः-'ईसिं अण्णमण्णमसंपत्ता......[पृ० १०१ पं० २] सव्वओ समंता आपूरेमाणा आपू-

प्रतिभाति [1]। 'अकोडा' इति भाषायाम्। ÷ भाषायाम् 'पतरूं' इति। = भाषायाम् 'नवसरो हार' इति।

चिट्ठंति। तेसिं[27] णं णागदंताणं उवरिं अन्नाओ[28] सोलस सोलस नागदंतपरिवाडीओ पन्नत्ता[29] ते णं णागदंता तं चेव जाव गयदंतसमाणा पन्नत्ता समणाउसो[30]! तेसु[31] णं णागदंतएसु बहवे[32] रययामया सिक्कगा[33] पन्नत्ता, तेसुं[34] णं रययामएसु सिक्कएसु बहवे[35] वेरुलियामईओ धूवघडीओ[36] पं० ताओ णं धूवघडीओ कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुयाभिरामाओ सुगंधवरगंधियातो गंधवट्टिभूयाओ ओरालेणं मणुण्णेणं मणहरेणं घाणमणणिव्वुइकरेणं[37] गंधेणं ते पदेसे सव्वओ समंता आपूरेमाणा आपूरेमाणा [पृ० १०२ पं० १-२] जाव चिट्ठंति।

[१०१]तेसिं[1] णं दाराणं उभओ[2] पासे दुहओ[3] णिसीहियाए सोलस[4] सोलस सालभंजियापरिवाडिओ पन्नत्ताओ,

रेमाणा सिरीए अईव अईव उवसोभेमाणा चिट्ठंति' एतच्च प्रागेव [पृ० १०१ पं० ६] यानविमानवर्णने व्याख्यातमिति न भूयो व्याख्यायते। २७ तेषां नागदन्तकानामुपरि प्रत्येकम्-२८अन्याः षोडश षोडश नागदन्तपरिपाट्यः प्रज्ञप्ताः २९ ते च नागदन्ताः 'यावत्' करणात् 'मुत्ताजालंतरुसियहेमजाल...इत्यादि [पृ० १६२ पं० ३] प्रागुक्तं सर्वं द्रष्टव्यं यावत्-गजदन्तसमानाः प्रज्ञप्ताः हे ३०श्रमण! हे आयुष्मन्!। ३१ तेषु नागदन्तेषु ३२ बहूनि रजतमयानि ३३ सिक्क[4]कानि प्रज्ञप्तानि, ३४ तेषु च रजतमयेषु सिक्ककेषु ३५ बह्वयो वैडूर्यमय्यो-वैडूर्यरत्नात्मिका ३६ धूपघटिकाः 'कालागुरु'......इत्यादि प्राग्वत् [पृ० ८ पं० २] नवरम्-३७घ्राणेन्द्रिय-मनोनिर्वृतिकरेण।

[१०१] १ तेषां द्वाराणां प्रत्येकम्-२ उभयोः पार्श्वयोरेकैकनैषेधिकीभावेन ३ द्विधातो-द्विप्रकारायां नैषेधिक्यां ४ षोडश

४ यस्योपरि दध्यादिभाण्डानि स्थाप्यन्ते तद् भाषायाम् 'शीकुं वा छीकुं' इति प्रसिद्धम्।

ताओ णं सालभंजियाओ [6]लीलट्ठियाओ [7]सुपइट्ठियाओ [8]सुअलंकियाओ [9]णाणाविहरागवसणाओ [10]णाणामल्लपिणद्धाओ [11]मुट्ठिगिज्झसुमज्झाओ [12]आमेलगजमलजुयलवट्टियअब्भुन्नयपीणरइयसंठियपीवरपओहराओ [13]रत्तावंगाओ [14]असियकेसीओ [15]मिउविसयपसत्थलक्खणसंवेल्लियग्गसिरयाओ ईसिं[16] असोगवरपायवसमुट्ठियाओ [17]वामहत्थ-

षोडश शालभञ्जिकापरिपाटयः प्रज्ञप्ताः, ५ ताश्च शालभञ्जिका ६ लीलया–ललिताङ्गनिवेशरूपया स्थिताः लीलास्थिताः, ७ सुष्ठु–मनोज्ञतया प्रतिष्ठिताः सुप्रतिष्ठिताः ८सुष्ठु–अतिशयेन रमणीयतया अलङ्कृताः स्वलङ्कृताः ९नानाविधो–नानाप्रकारो रागो येषां तानि नानाविधरागाणि तानि वसनानि–वस्त्राणि यासां तास्तथा १० नानारूपाणि माल्यानि–पुष्पाणि पिनद्धानि–आविद्धानि यासां ता नानामाल्यपिनद्धाः,* ११ मुष्टिग्राह्यं सुष्ठु–शोभनं मध्यं मध्यभागो यासां तास्तथा, १२पीनं–पीवरं रचितं संस्थितं–संस्थानं यकाभ्यां तौ पीनरचितसंस्थानौ आमेलकः–आपीडः–शेखरकः इत्यर्थः तस्य यमलयुगलं–समश्रेणिकं यद् युगलं तद्वत् वर्त्तितौ बद्धस्वभावौ–उपचितकठिनभावाविति भावः–अभ्युन्नतौ पीनरचितसंस्थानौ च पयोधरौ यासां तास्तथा, १३ रक्तोऽपाङ्गो–नयनोपान्तरूपो यासां तास्तथा, १४ असिताः–कृष्णाः केशा यासां ता असितकेश्यः, एतदेव सविशेषमाचष्टे–१५ मृदवः–कोमलाः विशदा निर्मलाः प्रशस्तानि–शोभनानि अस्फुटिताग्रत्वप्रभृतीनि लक्षणानि येषां ते प्रशस्तलक्षणाः संवेल्लितं–संवृतम् अग्रं येषां ते संवेल्लिताग्राः शिरोजाः–केशा यासां ता मृदुविशदप्रशस्तलक्षणसंवेल्लिताग्रशिरोजाः, १६ ईषत्–मनाक् अशोकवरपादपे समुपस्थिताः–आश्रिता ईषदशोकवरपादपसमुपस्थिताः तथा १७ वामहस्तेन गृहीतमग्रं शालायाः–शाखायाः अर्थादशोकपादपस्य यकाभिस्ता वामहस्तगृहीताग्रशालाः

* "क्तान्तस्य परिनिपातः सुखादिदर्शनात्"–राय० वि० [पृ०४८ टिप्पण १।

रायपसेणइयं । ॥१६६॥

ग्गहियग्गसालाओ ईसिं[१८] अद्धच्छिकडक्खचिट्ठिएणं लूसमाणीओ[१९] विव चक्खुल्लोयणलेसेहि[२०] य अन्नमन्नं खिज्जमाणीओ विव पुढविपरिणामाओ[२१] सासयभावमुवगयाओ[२२] चन्दाणणाओ[२३] चंदविलासिणीओ[२४] चंदद्धसमणिडालाओ[२५] चंदाहियसोमदंसणाओ[२६] उक्का[२७] विव उज्जोवेमाणाओ विज्जुघणमिरियसूरदिप्पंततेयअहिययरसन्निकासाओ[२८] सिंगारागाररचारुवेसाओ[२९] पासाइयाओ जाव [पृ० ११ पं० १२] चिट्ठंति ।

[१०२] तेसिं[१] णं दाराणं उभओ[२] पासे[३] दुहओ णिसीहियाए[४] सोलस[५] सोलस

१८ईषत्–मनाक् अर्धं–तिर्यग् वलितम् अक्षि येषु कटाक्षरूपेषु चेष्टितेषु तैः १९मुष्णन्त्य इव सुरजनानां मनांसि २०अन्योऽन्यं परस्परम् चक्षुषां लोकनेन–आलोकनेन ये लेशाः–संश्लेषास्तैः खिद्यमाना इव किमुक्तं भवति ? एवं नाम तास्तिर्यग्वलिताक्षिकटाक्षैः परस्परमवलोकमाना अवतिष्ठन्ति यथा नूनं परस्परं सौभाग्यासहनतस्तिर्यग्वलिताक्षिकटाक्षैः परस्परं खिद्यन्ति इवेति, २१ पृथिवीपरिणामरूपाः २२ शाश्वतभावमुपगता विमानवत् २३ चन्द्र इवाननं मुखं–यासां तास्तथा २४ चन्द्रवत् मनोहरं विलसन्तीत्येवंशीलाश्चन्द्रविलासिन्यः २५ चन्द्रार्द्धसमम्–अष्टमीचन्द्रसमानं ललाटं यासां तास्तथा २६ चन्द्रादपि अधिकं सोमं–सुभगकान्तिमत् दर्शनम्–आकारो यासां तास्तथा २७ उल्का इव उद्द्योतमानाः २८ विद्युतो ये घनाः–बहलतरा मरीचयस्तेभ्यो यच्च सूर्यस्य दीप्यमानं दसं–तेजस्तस्मादपि अधिकतरः सन्निकाशः–प्रकाशो यासां तास्तथा, '२९ सिंगारागारचारुवेसाओ...अभिरूवाओ चिट्ठंति' इति प्राग्वत् [पृ० ११ पं० १२ ]।

[१०२] १ तेषां द्वाराणां प्रत्येकम्–२ उभयोः ३ पार्श्वयोरेकैकनैषेधिकीभावेन या ४ द्विधा नैषेधिकी तस्यां ५ षोडश षोडश

जालकडगपरिवाडीओ पन्नत्ता, ते णं जालकडगा सव्वरयणामया अच्छा जाव [पृ० १९ पं० ५] पडिरूवा ।

[१०३] तेसिं णं दाराणं उभओ पासे[3] दुहओ[4] निसीहियाए सोलस[5] सोलस घंटापरिवाडीओ[6] पन्नत्ता, तासिं[7] णं घंटाणं इमेयारूवे वन्नावासे पन्नत्ते, तंजहा-जंबूणयामईओ[8] घंटाओ वयरामयाओ[9] लालाओ णाणामणिमया[10] घंटापासा तवणिज्जामइयाओ[11] संखलाओ रययामयाओ[12] रज्जूतो। ताओ[13] णं घंटाओ ओहस्सराओ[14] मेहस्सराओ[15] हंसस्सराओ[16] कुंचस्सराओ[17] सीहस्सराओ[18] दुंदुहिस्सराओ[19] णंदिस्सराओ[20] णंदिघोसाओ[21] मंजुस्सराओ[22] मंजुघोसाओ[23]



---

६ जालकटकाः प्रज्ञप्ताः, जालकटको–जालकाकीर्णो रम्यसंस्थानः प्रदेशविशेषः, ७ ते च जालकटकाः 'सव्वरयणामया...जाव पडिरूवा' इति [पृ० १९ पं० ८] प्राग्वत् ।

[१०३] १तेषां द्वाराणां प्रत्येकम्–२उभयोः ३ पार्श्वयोः ४द्विधातो नैषेधिक्यां ५षोडश षोडश ६घण्टापरिपाट्यः प्रज्ञप्ताः, ७तासां च घण्टानामयमेतद्रूपो वर्णावासो–वर्णकनिवेशः प्रज्ञप्तः, तद्यथा–८ जम्बूनदमय्यो घण्टाः ९ वज्रमय्यो लालाः १० नानामणिमया घण्टापार्श्वाः ११ तपनीयमय्यः शृङ्खलाः यासु ता अवलम्बितास्तिष्ठन्ति १२ रजतमय्यो रज्जवः १३ ताश्च घण्टाः १४ओघेन–प्रवाहेण स्वरो यासां ता ओघस्वराः १५ मेघस्येव अतिदीर्घः स्वरो यासां ता मेघस्वराः १६ हंसस्येव मधुरः स्वरो यासां ता हंसस्वराः, एवं १७ क्रौञ्चस्वराः १८ सिंहस्येव च प्रभूतदेशव्यापी स्वरो यासां ताः सिंहस्वराः एवं १९ दुन्दुभिस्वराः २० नन्दिस्वराः द्वादशविधतूर्यसङ्घातो नन्दिः २१ नन्दिवत् घोषो–ह्रादो यासां ता नन्दिघोषाः २२ मञ्जुः–प्रियः स्वरो यासां ता मञ्जुस्वराः, एवं २३मञ्जुघोषाः,

सुस्सराओ सुस्सरघोसाओ उरालेणं मणुन्नेणं मणहरेणं कन्नमणनिव्वुइकरेणं सद्देणं ते पदेसे सव्वओ समंता आपूरेमाणाओ आपूरेमाणाओ जाव चिट्ठंति ।

[१०४]तेसिं[1] णं दाराणं उभओ पासे दुहओ[2] णिसीहियाए सोलस[3] सोलस वणमालापरिवाडीओ[4] पन्नत्ताओ, ताओ[5] णं वणमालाओ णाणा[6]मणिमयदुमलयकिसलयपल्लवसमाउलाओ छप्पय[7]परिभुज्जमाणसोहंतसस्सिरीयाओ पासाईयाओ...[पृ० ११ पं० १२] ।

[१०५] तेसिं[1] णं दाराणं उभओ पासे दुहओ[2] णिसीहियाए सोलस[3] सोलस पगंठगा[4] पन्नत्ता, ते[5] णं पगंठगा

---

निव्वुइना ? २४ सुस्वराः २५सुस्वरघोषाः, 'उरालेणं' इत्यादि [पृ० १०१ पं० ३ तथा ९] प्राग्वत् ।

[१०४] १ तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोः २ द्विधातो नैषेधिक्यां ३ षोडश षोडश ४ वनमालापरिपाट्यः प्रज्ञप्ताः, ५ ताश्च वनमालाः ६नानाद्रुमाणां नानालतानां च यानि किशलयानि ये च पल्लवास्तैः समाकुलाः—सम्मिश्राः ७ षट्पदैः परिभुज्यमानाः सत्यः शोभमानाः षट्पदपरिभुज्यमानशोभमानाः अत एव सश्रीकाः ८'पासाईयाओ'इत्यादि पदचतुष्टयं प्राग्वत् [पृ० ११ पं० १२]

[१०५] १ तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोरेकैकनैषेधिकीभावेन या २ द्विधा नैषेधिकी तस्यां ३ षोडश षोडश ४ प्रकण्ठकाः प्रज्ञप्ताः, प्रकण्ठको नाम पीठविशेषः, आह च जीवाभिगममूलटीकाकार०ः—"प्रकण्ठौ पीठविशेषौ [ ] इति, ५ ते च

---

० जीवा० वि० प्र०पृ० २०९ पं० ४ । "चूर्णिकारस्तु एवमाह—"आदर्शवृत्तौ पर्यन्तावनतप्रदेशौ पीठौ प्रकण्ठौ" इति"—जीवा० वि० प्र० पृ० २०९ प० ४ ।

अड्ढाइ[6]ज्जाइं जोयणसयाइं आयामविक्खंभेणं पण[7]वीसं जोयणसयं बाहल्ले[8]णं सव्ववयरा[9]मया अच्छा [पृ० १९ पं० ५] जाव पडिरूवा। तेसिं णं पगंठगाणं उवरिं पत्तेयं पत्तेयं पासा[10]यवडेंसगा पन्नत्ता, [11]तेणं पासायवडेंसगा अड्ढाइ[12]ज्जाइं जोयणसयाइं उड्ढं उच्चत्तेणं [13]पणवीसं जोयणसयं विक्खंभेणं अब्भुग्ग[14]यमूसिअपहसिया विव [15]विविहमणिरयणभत्तिचित्ता वाउद्धुयविजय[16]वेजयंतपडागच्छत्ताइच्छत्तकलिया

प्रकण्ठकाः प्रत्येकम्–६ अर्द्धतृतीयानि योजनशतान्यायामविष्कम्भाभ्याम् ७ पञ्चविंशं–पञ्चविंशत्यधिकं योजनशतं बाहल्येन पिण्डभावेन ८ सर्वात्मना ते प्रकण्ठकाः वज्रमया–वज्ररत्नमयाः 'अच्छा सण्हा' इत्यादि विशेषणजातं [पृ० १९ पं० ८] प्राग्वत्। ९ तेषां प्रकण्ठकानां उपरि प्रत्येकं ○प्रत्येकं १० प्रासादावतंसकाः प्रज्ञप्ताः, प्रासादावतंसका नाम प्रासादविशेषाः, उक्तं च जीवाभिगममूलटीकायाम्–"=प्रासादावतंसकौ–प्रासादविशेषौ" [ ] इति, ११ ते च प्रासादावतंसकाः– १२ अर्धतृतीयानि योजनशतानि ऊर्ध्वम् उच्चैस्त्वेन १३ पञ्चविंशं योजनशतं विष्कम्भेन, १४ अभ्युद्गता–आभिमुख्येन सर्वतो विनिर्गता उत्सृताः–प्रबलतया सर्वासु दिक्षु प्रसृता या प्रभा तया सिता इव–बद्धा इव तिष्ठन्तीति गम्यते, अन्यथा कथमिव ते अत्युच्चा निरालम्बाः तिष्ठन्तीति भावः, १५ विविधाः–अनेकप्रकारा ये मणयः–चन्द्रकान्तादयो यानि च रत्नानि–कर्केतनादीनि तेषां भक्तिभिः–विच्छित्तिविशेषैश्चित्रा–नानारूपाः आश्चर्यवन्तो वा नानाविधमणिरत्नभक्तिचित्राः, १६ वातोद्धूता–वायुकम्पिताः विजयः–अभ्युदयस्तत्सूचिका वैजय-

○ "इह एकं प्रति 'प्रत्येकम्' इति आभिमुख्ये वर्तमानः 'प्रति' शब्दः समस्यते ततो वीप्साविवक्षाया द्विर्वचनम्"–राय० वि०। = जीवा० वि० प्र० पृ० २०९ प० ७। ÷ का इति तृती-पा० ४–५।

तुंगा[17] गगणतल[18]मणुलिहंतसिहरा जालंतर[19]रयण= पंजरु[20]म्मिलिय व्व मणिकणग[21]थूभियागा वियसियसय[22]-वत्तपोंडरीयतिलगरयणद्धचंदचित्ता [23]णाणामणिदामालंकिया [24]अंतो बहिं च सण्हा तवणिज्ज[25]वालुयापत्थडा

न्त्यभिधाना याः पताका अथवा विजया इति वैजयन्तीनां पार्श्वकर्णिका उच्यन्ते तत्प्रधाना वैजयन्त्यो विजयवैजयन्त्यः पताकास्ता एव विजयवर्जिता वैजयन्त्यः, छत्रातिच्छत्राणि–उपर्युपरि स्थितान्यातपत्राणि तैः कलिता वातोद्धूतविजयवैजयन्तीपताकाच्छत्रातिच्छत्र कलिताः १७तुङ्गा–उच्चा उच्चैस्त्वेन–अर्द्धतृतीययोजनशतप्रमाणत्वात् अत एव १८गगनतलं–अम्बरतलम् +अनुलिखन्ति–अभिलङ्घयन्ति शिखराणि येषां ते तथा, १९ जालानि–जालकानि तानि च भवनभित्तिषु लोके प्रतीतानि, तदन्तरेषु विशिष्टशोभानिमित्तं रत्नानि येषु ते जालान्तर–रत्नाः, तथा २० ×पञ्जरात् उन्मीलिता इव–बहिष्कृता इव पञ्जरोन्मीलिता इव, यथा हि किल किमपि वस्तु पञ्जरात्–वंशादिमयाच्छादनविशेषात् बहिष्कृतम्–अत्यन्तमविनष्टच्छायत्वात् शोभते एवं तेऽपि प्रासादावतंसका इति भावः, तथा २१ मणि-कनकानि–मणिकनकमय्यः स्तूपिकाः–शिखराणि येषां ते मणिकनकस्तूपिकाः, तथा २२ विकसितानि यानि शतपत्राणि पुण्डरीकाणि च द्वारादौ 8 प्रतिकृतित्वेन स्थितानि तिलकरत्नानि–भित्त्यादिषु पुण्ड्रविशेषा अर्द्धचन्द्राश्च द्वारादिषु तैश्चित्राः–नानारूपा आश्चर्यभूता वा विकसितशतपत्रपुण्डरीकतिलकरत्नार्द्धचन्द्रचित्राः, तथा २३ नाना अनेकरूपाणि यानि मणिदामानि–मणिमयपुष्पमालाः तैः अलं-कृतानि शोभितानि नानामणिदामालंकृतानि≋ तथा २४ अन्तर्बहिश्च श्लक्ष्णा–मसृणाः, तथा २५ तपनीयं–सुवर्णविशेषस्तन्मय्या

="सूत्रे विभक्तिलोपः प्राकृतत्वात्"–राय०वि० । सत्या विभक्तौ 'जालतररयणा' इति युक्तम् । + 'शतृ' प्रत्ययान्त कृदन्त प्रथमाबहुबचनम्। × भाषायाम् 'पाजरू' इति । 8 प्रकृति–पा० ४ भा० १। प्रकृतत्वे–पा० ५। प्राकृतत्वे–भा० २। ≋ एतच्च विशेषणं मुद्रित एव पुस्तके।

सुह[२६]फासा सस्सिरीयरूवा [पृ० १९ पं० ५] पासादीया दरिसणिज्जा जाव दामा [पृ० १०१ पं० १]।

[१०६] तेसिं णं दाराणं उभओ पासे सोलस सोलस तोरणा पन्नत्ता, णाणामणिमया णाणामणिमएसु खंभेसु उवणिविट्ठसन्निविट्ठा जाव पउमहत्थगा। तेसिं णं तोरणाणं पत्तेयं पुरओ दो दो सालभंजियाओ पन्नत्ताओ, जहा हेट्ठा तहेव। तेसिं णं तोरणाणं पुरओ नागदंता पन्नत्ता जहा हेट्ठा जाव दामा।

---

वालुकायाः प्रस्तटः–प्रस्तरो येषु ते तपनीयवालुकाप्रस्तटाः, २६ 'सुहफासा. . . पासाईया' इत्यादि प्राग्वत् [पृ० १९ पं० ८] तेषां च *प्रासादवतंसकानामन्तर्भूमिवर्णनम् [पृ० ९७ पं० २] उपर्युल्लोकवर्णनम् [पृ० ९७ पं० ३] सिंहासनवर्णनम् [पृ० ९८ पं० ३] उपरि = विजयदूष्यवर्णनम् [पृ० १०० पं० १—] वज्रांकुशवर्णनम् मुक्तादामवर्णनं च यथा प्राक् [पृ० १०० पं० ३–४] यानविमाने भावितं तथा भावनीयम्।

[१०६] १ तेषां द्वाराणां प्रत्येकम् २उभयोः पार्श्वयोरेकैकनैषेधिकीभावेन या द्विधा नैषेधिकी तस्यां षोडश षोडश तोरणानि प्रज्ञप्तानि, तानि च तोरणानि ३ 'नानामणिमयानि' इत्यादि [पृ० ७९ पं० ३ तथा पं० ७] तोरणवर्णनं यानविमानमिव निरवशेषं भावनीयम्। ४ तेषां तोरणानां पुरतः प्रत्येकं ५ द्वे द्वे शालभञ्जिके, शालभञ्जिकावर्णनं प्राग्वत् [पृ० १६५ पं० १] ६ तेषां तोरणानां पुरतो द्वौ द्वौ नागदन्तकौ प्रज्ञप्तौ, तेषां च नागदन्तकानां वर्णनं यथाऽधस्तादनन्तरमुक्तं तथा वक्तव्यम् [पृ० १६२ पं० ३]

---

* 'अवतसक'–वत् 'वसतक'शब्दोऽपि साधुः–[३–२–१५६ हैमश०] = जीवा० वि० पृ० २१० पं० ६।

तेसिं णं तोरणाणं पुरओ दो दो हयसंघाडा गयसंघाडा नरसंघाडा किन्नरसंघाडा किंपुरिससंघाडा महोरगसंघाडा गंधव्वसंघाडा उसभसंघाडा सव्वरयणामया अच्छा [पृ० १९ पं० ५] जाव पडिरूवा, एवं पंतीओ वीही मिहुणाइं । तेसिं[11] णं तोरणाणं दो [12]दो पउमलयाओ जाव [पृ० १८ पं० २-३] सामलयाओ णिच्चं

नवरमत्रोपरि नागदन्तका न वक्तव्या अभावात् । ७ तेषां तोरणानां पुरतो ८ द्वौ द्वौ हयसङ्घाटौ, ○सङ्घाटशब्दो युग्मवाची यथा 'साधुसङ्घाटः' इत्यत्र, ततो द्वे द्वे हययुग्मे इत्यर्थः, एवं ९ गज-नर-किन्नर-किंपुरुष-महोरग-गन्धर्व-वृषभसङ्घाटा अपि वाच्याः, एते च कथम्भूताः ? इत्याह-'सव्वरयणामया अच्छा...'इत्यादि [पृ० १९ प०८] प्राग्वत् । यथा चामीषां हयादीनामष्टानां सङ्घाटा उक्ताः १० तथा पङ्क्तयोऽपि वीथयोऽपि मिथुनकानि च वाच्यानि, तत्र सङ्घाटाः-समानलिङ्गयुग्म रूपाः पुष्पावकीर्णकाश्च, एकदिग्व्यवस्थिता श्रेणिः-पङ्क्तिः, उभयोः पार्श्वयोः एकैकश्रेणिभावेन यत् श्रेणिद्वयं सा वीथिः, स्त्रीपुरुषयुग्मं मिथुनकम् । ११ तेषां तोरणानां पुरतो १२ द्वे द्वे पद्मलते 'यावत्' करणात् 'द्वे द्वे नागलते द्वे द्वे अशोकलते द्वे द्वे चम्पकलते द्वे द्वे चूतलते द्वे द्वे वासन्तीलते द्वे द्वे कुन्दलते द्वे द्वे अतिमुक्तकलते' [पृ० १८ पं० २-] इति परिगृह्यते, द्वे द्वे श्यामलते, एताश्च कथम्भूताः ? इत्याह-'णिच्चं कुसुमियाओ' इत्यादि 'यावत्' करणात् 'निच्चं मउलियाओ [पृ० १८ पं० ४-] मञ्जरिवडिंसगधरीओ' इति परिगृह्यते, अस्य व्या-

○ हेमअनेकार्थकोशे 'सघाटिका' शब्दो युग्मवाची प्राप्यते-"सघाटिका तु कुट्टन्यां घ्राणे युग्मेऽम्बुकण्टके" का० ४ श्लो० ३८ । "सघाडी जुयले"इति देशीनाममालावचनात् [व० ८ गा० ७] 'संघाडी' शब्दोऽपि युग्मपर्यायी बोध्य । भाषायां तु 'सघाडो'इति । संस्कृते तु 'समूह'वाची 'संघात'शब्द. प्रतीतः ।

[67]सव्वरयणामयाइं अच्छाइं पडिरूवाइं [68]महया [69]वासिकछत्तसमाणाइं पण्ण[70]त्ताइं [71]समणाउसो! [72]से ए[73]एणं अट्ठेणं गोय[74]मा![75]एवं वुच्चइ-पउ[76]मवरवेइया 'पउमवरवेइया'।

पउ[77]मवरवेइया णं भंते! किं[78] [79]सासया [80]असासया? गो[81]यमा! सि[82]य सासया सि[83]य असासया। [84]से केणट्ठेणं भंते! एवं वुच्चइ-सिय *सासया सिय असासया? गो[85]यमा! द[86]व्वट्ठयाए सासया, व[87]न्नपज्जवेहिं गंधपज्जवेहिं रस-

सहस्रपत्रे च पद्मविशेषौ पत्रसंख्याविशेषाच्च पृथगुपात्ते, एतानि ६७ सर्वरत्नमयानि 'अच्छाइं' इत्यादि विशेषणजातं प्राग्वत् [पृ० १९ पं० ५]६८ महान्ति-महाप्रमाणानि ६९वार्षिकाणि-वर्षाकाले पानीयरक्षार्थं यानि कृतानि वार्षिकाणि तानि च तानि छत्राणि च तत्समानानि ७० प्रज्ञप्तानि हे ७१ श्रमण! हे आयुष्मन्! ७२ तद् ७३ एतेन अर्थेन-अन्वर्थेन ७४ गौतम! ७५एवमुच्यते-७६ 'पद्मवरवेदिका' इति, तेषु तेषु यथोक्तरूपेषु प्रदेशेषु यथोक्तरूपाणि पद्मानि पद्मवरवेदिकाशब्दस्य प्रवृत्तिनिमित्तमिति भावः, व्युत्पत्तिश्चैवं-पद्मवरा-पद्मप्रधाना वेदिका पद्मवरवेदिका-इति। ७७पद्मवरवेदिका ७८किं ७९ शाश्वती उत ८० अशाश्वती-किं नित्या उत अनित्या? इति भावः, भगवानाह-८१गौतम! ८२ =स्यात् शाश्वती ८३ स्यात्-अशाश्वती-कथंचिन्नित्या कथञ्चिदनित्या इत्यर्थः, ८४ प्रश्नसूत्रं सुगमम्। भगवानाह-८५ गौतम! ८६ द्रव्यार्थतया-द्रव्यास्तिकनयमतेन शाश्वती, द्रव्यास्तिकनयो हि द्रव्यमेव तात्त्विकमभिमन्यते न पर्यायान्, द्रव्यं चान्वयि परिणामित्वात् अन्वयित्वाच्च सकलकालभावि इति भवति द्रव्यार्थतया शाश्वती, ८७वर्णपर्यायैः-

* "'सासया' इति +आदन्ततया सूत्रे निर्देशः प्राकृत्वात्"-राय० वि०। = "'स्यात्' शब्दो निपातः-'कथंचित्'इति एतदर्थवाची"-राय०वि०।

+ आवन्त-भा०।

पद्मवरवेदिकाया नित्यानित्यत्वम्

पज्जवेहिं फासपज्जवेहिं [88]असासया, [89]से एएणट्ठेणं गोयमा! एवं वुच्चति सिय सासया सिय असासया। [90]पउमवरवेइया णं [91]भंते! [92]कालओ [93]केवच्चिरं होइ[94]? गोयमा[95]! [96]ण कयावि णासि [97]ण कयावि णत्थि [98]ण कयावि न भविस्सइ, [99]भुविं च [100]हवइ य भविस्सइ[101] य,

---

तत्तदन्यसमुत्पद्यमानवर्णविशेषरूपैः, एवं गन्धपर्यायैः रसपर्यायैः स्पर्शपर्यायैः उपलक्षणमेतत् तत्तदन्यपुद्गलविचटनोच्चटनैश्च ८८ अशाश्वती किमुक्तं भवति?–पर्यायास्तिकनयमतेन पर्यायप्राधान्यविवक्षायाम्–अशाश्वती, पर्यायाणां प्रतिक्षणभावितया कियत्कालभावितया विनाशित्वात्, ८९ 'से एएणट्ठेणं' इत्याद्युपसंहारवाक्यं सुगमम्।

इह द्रव्यास्तिकनयवादी स्वमतप्रतिष्ठापनार्थमेवमाह–नात्यन्तासत उत्पादः नापि सतो नाशः "नासतो विद्यते भावो नाभावो विद्यते सतः" [भग० गी० अ० २ श्लो०१६] इति वचनात्, यौ तु दृश्येते प्रतिवस्तु उत्पाद–विनाशौ तद् आविर्भावतिरोभावमात्रम् यथा सर्पस्य उत्फणत्व–विफणत्वे, तस्मात् सर्वं वस्तु नित्यमिति, एवं च तन्मतचिन्तायां संशयः–किं घटादिवत् द्रव्यार्थतया शाश्वती उत सकलकालमेकरूपा–इति? ततः संशयापनोदार्थं भगवन्तं भूयः पृच्छति–९०पद्मवरवेदिका प्राग्वत् [पृ० २०६ पं० ५] ९१भदन्त! ९२ कालतः ९३ कियच्चिरं–कियन्तं कालं यावद् ९४ भवति–एवंरूपा हि कियन्तं कालमवतिष्ठति इति? भगवानाह–९५ गौतम! ९६ न कदाचिन्नासीत् सर्वदैवासीदिति भावः अनादित्वात्, तथा ९७ न कदाचिन्न भवति, सर्वदैव वर्तमानकालचिन्तायां भवतीति भावः सदैव भावात्, तथा ९८न कदाचिन्न भविष्यति, किन्तु भविष्यच्चिन्तायां सर्वदैव भविष्यतीति प्रतिपत्तव्यं, अपर्यवसितत्वात्, तदेवं कालत्रयचिन्तायां नास्तित्वप्रतिषेधं विधाय सम्प्रत्यस्तित्वं प्रतिपादयति–९९ अभूच्च १०० भवति च १०१ भविष्यति चेति,

धुवा[१०२] णियया[१०३] सासया[१०४] अक्खया[१०५] अव्वया[१०६] अवट्ठिया[१०७] णिच्चा[१०८] पउमवरवेइया।

[१२०] [१]सा णं पउमवरवेइया [२]एगेणं वणसंडेणं [३]सव्वओ समंता संपरिक्खित्ता। [४]से णं वणसंडे [५]देसूणाइं दो जोयणाइं [६]चक्कवालविक्खंभेणं [७]उवयारियालेणसमे परिक्खेवेणं [८]वणसंडवण्णतो+ भाणितव्वो जाव [पृ० १८३ पं० २–कं० ११६] विहरंति।

---

एवं त्रिकालावस्थायित्वात् १०२ ध्रुवा मेर्वादिवत् १०३ ध्रुवत्वादेव सदैव स्वस्वरूपनियता १०४नियतत्वादेव च शाश्वती–शश्वद्भवनस्वभावा १०५ शाश्वतत्वादेव च सततं गङ्गासिन्धुप्रवाहप्रवृत्तावपि पौण्डरीकह्रद इवानेकपुद्गलविचटनेऽपि तावन्मात्रान्यपुद्गलोच्चटनसंभवादक्षया, न विद्यते क्षयो–यथोक्तस्वरूपाकारपरिभ्रंशो यस्याः सा अक्षया, १०६ अक्षयत्वादेव अव्यया–अव्ययशब्दवाच्या मनागपि स्वरूपचलनस्य जातुचिदप्यभावात्, १०७ अव्ययत्वादेव सदैव स्वप्रमाणेऽवस्थिता मानुषोत्तराद् बहिः समुद्रवत्, १०८ एवं च स्वप्रमाणे सदावस्थानेन चिन्त्यमाना नित्या धर्मास्तिकायादिवत्।

[१२०] १ सा पद्मवरवेदिका २ एकेन वनखण्डेन ३ सर्वतः समन्तात् परिक्षिप्ता, ४ स च वनखण्डो ५ देशोने द्वे योजने ६ चक्रवालविष्कम्भतः–७परिक्षेपतः उपकारिकालयनपरिक्षेपपरिमाणो, ८वनखण्डवर्णकः 'किण्हे किण्होभासे'...इत्यादिरूपः समस्तोऽपि प्राग्वत् [पृ० ९ पं० २ तथा पृ० १८३ पं० २] यावद् विहरन्ति।

---

+ वनखण्डवर्णकविषयः सविस्तरः पाठः जीवा० सू० पृ० १८३–१९७।

[१२१] [1]तस्स× णं उवयारियालेणस्स [2]चउद्दिसिं चत्तारि [3]तिसोवाणपडिरूवगा पण्णत्ता. वण्णओ. तोरणा झया छत्ताइच्छत्ता [पृ० ७८ पं० २]। [4]तस्स णं उवयारियालयणस्स उवरिं बहुसमरमणिज्जे भूमिभागे पण्णत्ते जाव मणीणं फासो [कं० ३३–४०]।

[१२२] [1]तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स [2]बहुमज्झदेसभाए एत्थ णं [3]महेगे [4]मूलपासायवडेंसए पण्णत्ते, [5]से णं मूलपासायवडिंसते [6]पंच जोयणसयाइं उड्ढं उच्चत्तेणं [7]अड्ढाइज्जाइं जोयणसयाइं विक्खंभेणं [8]अब्भुग्गयमूसिय–वण्णतो [पृ० १६९ पं० ३] भूमिभागो [पृ० ८१ पं० ३] उल्लोओ [पृ० ९७ पं० ३] सीहासणं सपरिवारं

[१२१] १ तस्य–उपकारिकालयनस्य २ चतुर्दिशि–चतसृषु दिक्षु एकैकस्यां दिशि एकैकभावेन चत्वारि ३ त्रिसोपानप्रतिरूपकाणि–प्रतिविशिष्टरूपकाणि त्रिसोपानानि प्रज्ञप्तानि, त्रिसोपानवर्णको यानविमानवत् वक्तव्यः [पृ० ७८ पं ७–] तेषां च त्रिसोपानप्रतिरूपकाणां पुरतः प्रत्येकमेकैकं तोरणं, तोरणवर्णकोऽपि तथैव [पृ० ७९ पं० ३,६] ४ तस्य उपकारिकालयनस्य 'बहुसमरमणिज्जे भूमिभागे' इत्यादिना भूमिभागवर्णनकं यानविमानवर्णनवत् तावद् वाच्य यावद् मणीनां स्पर्शः [पृ० ८१ पं० ११–पृ० ९४ पं० ५]।

[१२२] १ तस्य च बहुसमरमणीयस्य भूमिभागस्य २ बहुमध्यदेशभागे अत्र ३ महानेको ४ मूलप्रासादावतंसकः प्रज्ञप्तः, ५स च ६ पञ्च योजनशतान्यूर्ध्वमुच्चैस्त्वेन ७ अर्द्धतृतीयानि योजनशतानि विष्कम्भतः ८ तस्य वर्णनम् मध्येभूमिभागवर्णनम् उल्लोकव-

× इदमपि सविस्तर मूलं जीवा० सू० पृ० २२१ प्र० पं० ५।

भाणियव्वं [पृ० १०२ पं० ४–] अट्ठट्ठ मंगलगा झया छत्ताइच्छत्ता। [9]से णं मूलपासायवडेंसगे [10]अंण्णेहिं चउहिं पासायवडेंसएहिं तयद्धुच्चत्तप्पमाणमेत्तेहिं सव्वतो समंता संपरिखित्ता, ते णं पासायवडेंसगा [11]अड्ढाइज्जाइं जोयणसयाइं उड्ढं उच्चत्तेणं [12]पणवीसं जोयणसयं विक्खंभेणं जाव वण्णओ [पृ०१६९ पं० ३–] [13]ते णं पासायवडिंसया

र्णनं द्वारबहिःस्थितप्रासादवद् भावनीयम् [पृ० १६९ पं० ९.] तस्य* च मूलप्रासादावतंसकस्य बहुमध्यदेशभागेऽत्र महती एका मणिपीठिका प्रज्ञप्ता, अष्टौ योजनान्यायामविष्कम्भाभ्यां चत्वारि योजनानि बाहल्यतः सर्वात्मना मणिमयी 'अच्छा' इत्यादि विशेषणकदम्बकं प्राग्वत् [पृ० १९ पं० ५]। 8'तीसे णं' इत्यादि, तस्याश्च मणिपीठिकाया उपरि महदेकं सिंहासनं प्रज्ञप्तं, तस्य सिंहासनस्य वर्णनं, परिवारभूतानि शेषाणि भद्रासनानि प्राग्वद् वक्तव्यानि [पृ० १०२ पं० ९] ९ स मूलप्रासादावतंसकः १० अन्यैश्चतुर्भिः प्रासादावतंसकैस्तदर्द्धोच्चत्वप्रमाणैः सर्वतः समन्ततः परिक्षिप्तः, तदर्द्धोच्चत्वप्रमाणमेव दर्शयति–११ अर्द्धतृतीयानि योजनशतान्यूर्ध्वमुच्चैस्त्वेन, १२ पञ्चविंशं योजनशतं विष्कम्भेन, तेषामपि स्वरूपवर्णनं मध्यभूमिभागवर्णनमुल्लोकवर्णनं च प्राग्वत् [पृ० १६९ पं० ३ पृ० ८१ पं० ३–पृ० ९७ पं० ३–] तेषां च प्रासादावतंसकानां बहुमध्यदेशभागे प्रत्येकं प्रत्येकं सिंहासनं प्रज्ञप्तं, तेषां च सिंहासनानां वर्णनं प्राग्वत् [पृ० १०२ पं० ९ पृ० ९८ पं० ३] नवरमत्र शेषाणि परिवारभूतानि– वक्तव्यानि, १३ ते प्रासादावतंसका

*'तस्य' इत्यादिकस्य मणिपीठिकासम्बन्धिनः विवरणस्य मूलं न प्रतिभाति। 8" 'तीसे णं' इत्यादि " प्रतीकदर्शनाद् अत्र प्रस्तुतमूलपाठ–विवरणकारलब्धमूलपाठयोर्भेदः प्रतीयते। –नि भद्रासनानि व०–भा० २।

[14]अण्णेहिं चउहिं पासायवडिंसएहिं तयद्धुच्चत्तप्पमाणमेत्तेहिं सव्वओ समंता संपरिखित्ता, [15]ते णं पासायवडेंसया [16]पणवीसं जोयणसयं उड्ढं उच्चत्तेणं [17]बासट्ठिं जोयणाइं अद्धजोयणं च विक्खंभेणं अब्भुग्गयमूसिय-[पृ० १६९ पं० ३] वण्णओ भूमिभागो [पृ० ८१ पं ३]। उल्लोओ [पृ० ९७ पं० ३] सीहासणं [18]सपरिवारं भाणियव्वं [पृ० १०२ पं० ४-] अट्ठट्ठ मंगलगा झया छत्तातिच्छत्ता. [19]ते णं पासायवडेंसगा [20]अण्णेहिं चउहिं पासायवडेंसएहिं तदद्धुच्चत्तपमाणमेत्तेहिं सव्वतो समंता संपरिक्खित्ता, [21]ते णं पासायवडेंसगा [22]बासट्ठिं जोयणाइं अद्धजोयणं च उड्ढं उच्चत्तेणं [23]एक्कतीसं जोयणाइं कोसं च विक्खंभेणं वण्णओ उल्लोओ सीहासणं○ सपरिवारं

१४ अन्यैश्चतुर्भिः प्रासादावतंसकैः तेषां मूलप्रासादावतंसकानां यदर्द्धं तदुच्चत्वप्रमाणमात्रैः—मूलप्रासादावतंसकापेक्षया चतुर्भागमात्रप्रमाणैः सर्वतः समन्तात् संपरिक्षिप्ताः, तदर्द्धोच्चत्वप्रमाणमेव दर्शयति—१५ ते प्रासादावतंसकाः १६ पञ्चविंशं योजनशतमूर्ध्वमुच्चैस्त्वेन १७द्वाषष्टिर्योजनानि अर्द्धयोजनं च विष्कम्भतः, तेषामपि स्वरूपवर्णनम् मध्यभागभूमिवर्णनम्—उल्लोकवर्णनम् सिंहासनवर्णनं— च सर्वं प्राग्वत् [पृ० १६९ पं० ३ पृ० ८१ पं० ३—पृ० ९७ पं० ३ पृ० ९८ पं० ३] केवलमत्रापि सिंहासनं १८ सपरिवारं वक्तव्यम्। १९ ते च प्रासादावतंसका २० अन्यैश्चतुर्भिः प्रासादावतंसकैस्तदर्द्धोच्चत्वप्रमाणैः अनन्तरोक्तप्रासादावतंसकार्द्धोच्चत्वप्रमाणैर्मूलप्रासादावतंसकापेक्षया अष्टभागप्रमाणैः सर्वतः समन्तात् संपरिक्षिप्ताः, तदर्द्धोच्चत्वप्रमाणमेव दर्शयति—२१ ते च प्रासादावतंसका २२ द्वाषष्टिर्योजनानि अर्धयोजनं च ऊर्ध्वमुच्चैस्त्वेन २३ एकत्रिंशतं योजनानि क्रोशं च विष्कम्भतः, एषामपि स्वरूपवर्णनम् मध्यभागभूमिवर्णनम् उल्लोक-

○-ण अपरि-भा० १। —नम् परिवाररहितं प्राग्वत् ते च-भा० १।

पासाय०उवरिं अट्ठट्ठ मंगलगा झया छत्तातिछत्ता।

वर्णनम् सिंहासनवर्णनं च परिवाररहितं प्राग्वत् [पृ० १६९ पं० ३ पृ० ८१ पं० ३–पृ० ९७ पं० ३ पृ० ९८ पं० ३ पृ० १०२ पं ९] ते+ऽपि प्रासादावतंसका अन्यैश्चतुर्भिः प्रासादावतंसकैस्तदर्द्धोच्चत्वप्रमाणैः–अनन्तरोक्तप्रासादावतंसकार्द्धोच्चत्वप्रमाणैर्मूलप्रासादावतंसकापेक्षया षोडशभागप्रमाणैः सर्वतः समंतात् संपरिक्षिप्ताः, तदर्द्धोच्चत्वप्रमाणमेव दर्शयति–एकत्रिंशतं योजनानि क्रोशं च ऊर्ध्वमुच्चैस्त्वेन पञ्चदश योजनानि अर्द्धतृतीयांश्चैव क्रोशान् विष्कम्भतः। एतेषामपि स्वरूपादिवर्णनमनन्तरोक्तम् [प्र० पृ० पं० २] तेऽपि च प्रासादावतंसका अन्यैश्चतुर्भिः प्रासादावतंसकैस्तदर्द्धोच्चत्वप्रमाणैः–अनन्तरोक्तप्रासादावतंसकार्द्धोच्चत्वप्रमाणैः सर्वतः समन्तात् संपरिक्षिप्ताः, तदर्द्धोच्चत्वप्रमाणमेव दर्शयति–पञ्चदश योजनानि अर्द्धतृतीयांश्च क्रोशान् ऊर्ध्वमुच्चैस्त्वेन देशोनान्यष्टौ योजनानि विष्कम्भेन, एषामेव स्वरूपव्यावर्णनं भूमिभागवर्णनम् उल्लोकवर्णनं सिंहासनवर्णनं च परिवारवर्जितं प्राग्वत् [प्र० पृ० पं० २] 

+ प्रस्तुतसंपादनोपयुक्तेषु एकस्मिन्नपि लिखितादर्शे अतः आरम्य कण्डिकासमाप्तिपर्यन्तस्य विवरणस्य मूलपाठो न लभ्यते एवमेव च मु० पुस्तकेऽपि, अत एवात्र विवरणकारलब्धमूलपाठ–प्राप्तादर्शमूलपाठयोर्भेदः। स च अलभ्यमानो मूलपाठः श्रीजीवाजीवाभिगमसूत्रे प्रस्तुतान्यप्रसङ्गेऽपि एवमुपलभ्यते–"ते ण पासायवडिसगा एक्कतीसं जोयणाइ कोसं च उड्ढं उच्चत्तेण, अद्धसोलसजोयणाइ अद्धकोस च आयामविक्खभेण...ते ण पासायवडिसगा अद्धसोलस जोयणाइ अद्धकोस च उड्ढ उच्चत्तेण देसूणाइं अट्ठ जोयणाइं आयामविक्खभेणं...पृ० २२१ प० २–८। तद्विवरण चैवम्–"तदर्धोच्चत्वप्रमाणमेव दर्शयति–एकत्रिशतं योजनानि क्रोश चैकमूर्ध्वमुच्चैस्त्वेन, पञ्चदश योजनानि अर्धतृतीयाश्च क्रोशान् आयाम–विष्कम्भाभ्याम्......तदर्धोच्चत्वप्रमाणमेव दर्शयति–पञ्चदश योजनानि अर्धतृतीयाश्च क्रोशान् ऊर्ध्वमुच्चैस्त्वेन देशोनानि अष्टौ योजनानि आयाम–विष्कम्भाभ्याम्"–जीवा० वृ० पृ० २२३ प्र० प० ११–पृ० २२३ पं० ४।

सुधर्मासभावर्णकः

[१२३]—[1]तस्स णं मूलपासायवडेंसयस्स [2]उत्तरपुरत्थिमेणं एत्थ णं [3]सभा सुहम्मा पण्णत्ता, [4]एगं जोयणसयं आयामेणं [5]पण्णासं जोयणाइं विक्खम्भेणं [6]बावत्तरिं जोयणाइं उड्ढं उच्चत्तेणं [7]अणेगखम्भ...जाव अच्छरगण... पासादीया [पृ० ९४ पं० ३–पृ० ९७ पं० १] [8]सभाए णं सुहम्माए [9]तिदिसिं [10]तओ दारा पण्णत्ता, [11]तंजहा–[12]पुरत्थिमेणं [13]दाहिणेणं [14]उत्तरेणं. [15]ते णं दारा [16]सोलस जोयणाइं उड्ढं उच्चत्तेणं [17]अट्ठ जोयणाइं विक्खम्भेणं [18]तावतियं चेव पवेसेणं [19]सेया वरकणगथूभियागा जाव वणमालाओ, [तेसि* णं दाराणं उवरिं अट्ठट्ठ मङ्गलगा झया छत्ताइच्छत्ता] [20]तेसि णं दाराणं पुरओ

[१२३] १ तस्य मूलप्रासादावतंसकस्य २ उत्तरपूर्वस्यामीशानकोणे इत्यर्थः, अत्र ३ सभा सुधर्मा प्रज्ञप्ता, सुधर्मा नाम विशिष्टच्छन्दकोपेता, सा ४ एकं योजनशतमायामतः ५ पञ्चाशत् योजनानि विष्कम्भतः ६ द्वासप्ततिर्योजनानि ऊर्ध्वमुच्चैस्त्वेन, कथंभूता सा? इत्याह–७अनेक....कञ्चणमणिरयणथूभियागा नानाविहपञ्चवण्णघण्टापडागपरिमण्डियग्गसिहरा [पृ० ९४ पं० ८–पृ०९७ पं० ९] अच्छा जाव पडिरूवा' इति प्राग्वत्। ८ सभायाश्च सुधर्मायाः ९ त्रिदिशि तिसृषु दिक्षु एकैकस्यां दिशि एकैकद्वारभावेन १० त्रीणि द्वाराणि प्रज्ञप्तानि, ११तद्यथा–एकं १२ पूर्वस्याम् एकं १३ दक्षिणस्याम् एकम् १४उत्तरस्याम् १५तानि च द्वाराणि प्रत्येकं १६षोडश षोडश योजनान्यूर्ध्वमुच्चैस्त्वेन १७ अष्टौ योजनानि विष्कम्भतः १८ तावन्त्येवाष्टौ योजनानीति भावः प्रवेशेन, १९ 'सेया वरकणगथूभियागा' इत्यादि प्रागुक्तद्वारवर्णनं तदेव तावद् वक्तव्यं यावत् वनमालाः [पृ० १६६ पं० ५–पृ० १६८ पं० ३] इति, २० तेषां

* अस्यां कण्डिकायाम्–[ ] एतच्चिह्नान्तर्गतः पाठ. त्रि० बा०।

[21]पत्तेयं पत्तेयं मुहमंण्डवे[22] पण्णत्ते, [23]ते णं मुहमण्डवा एगं[24] जोयणसयं आयामेणं पंण्णासं[25] जोयणाइं विक्खंभेणं साइरेगाइं[26] सोलस जोयणाइं उड्ढं उच्चत्तेणं वण्णओ[27] सभाए सरिसो, [तेसि* णं मुहमण्डवाणं तिदिसिं ततो दारा पण्णत्ता, तंजहा–पुरत्थिमेणं दाहिणेणं उत्तरेणं, ते णं दारा सोलस जोयणाइं उड्ढं उच्चत्तेणं अट्ठ जोयणाइं विक्खंभेणं तावइयं चेव पवेसेणं सेया वरकणगथूभियागा जाव वणमालाओ। तेसि णं मुहमंडवाणं भूमिभागा उल्लोया, तेसि णं मुहमंडवाणं उवरिं अट्ठट्ठ मङ्गलगा झया छत्ताइच्छत्ता।] तेसिं[28] णं मुहमंडवाणं पुरतो पत्तेयं[29] पत्तेयं पेच्छाघरमंडवे[30] पण्णत्ते, मुहमंडववत्तव्वया जाव दारा भूमिभागा उल्लोया।

[१२४] तेसिं[1] णं बहुसमरमणिज्जाणं भूमिभागाणं बहुमज्झदेसभाए[2] पत्तेयं[3] पत्तेयं वइरामए[4] अक्खाडए

---

च द्वाराणां पुरतः २१ प्रत्येकं प्रत्येकं २२ मुखमण्डपः प्रज्ञप्तः, २३ ते च मुखमण्डपा २४ एकं योजनशतमायामतः २५ पञ्चाशत् योजनानि विष्कम्भतः २६ सातिरेकाणि षोडश योजनानि ऊर्ध्वमुच्चैस्त्वेन, एतेषामपि 'अणेगखम्भसयमन्निविट्ठा' इत्यादि २७ वर्णनं सुधर्मसभाया इव निरवशेषं द्रष्टव्यम् [कं० १२३] २८ तेषां च मुखमण्डपानां पुरतः २९ प्रत्येकं प्रत्येकं ३० प्रेक्षागृहमण्डपः प्रज्ञप्तः, ते च प्रेक्षागृहमण्डपा आयाम–विष्कम्भ–उच्चैस्त्वैः प्राग्वत् [पृ० पं० ] प्रेक्षागृहमण्डपानां च भूमिभागवर्णनं प्राग्वत् तावद् वाच्यं यावद् मणीनां स्पर्शः [कं० ३३–४० तथा पृ० ९४ पं० ७–]

[१२४] १ तेषां च बहुसमरमणीयानां भूमिभागानां २बहुमध्यदेशभागे ३प्रत्येकं प्रत्येकं ४वज्रमयोऽक्षपाटकः प्रज्ञप्तः [पृ० ९७

पण्णत्ते, तेसिं णं वयरामयाणं अक्खाडगाणं बहु[6]मज्झदेसभागे [7]पत्तेयं पत्तेयं [8]मणिपेढिया पण्णत्ता, [9]ताओ णं मणिपेढियातो [10]अट्ठ जोयणाइं आयामविक्खंभेणं [11]चत्तारि जोयणाइं बाहल्लेणं सव्वमणि[12]मईओ अच्छाओ[13] जाव पडिरूवाओ, [14]तासि णं मणिपेढियाणं उवरिं [15]पत्तेयं पत्तेयं सीहा[16]सणे पण्णत्ते, सीहासण[17]वण्णओ सपरिवारो, तेसिं[18] णं पेच्छाघरमंडवाणं उवरिं अट्ठ[19] मंगलगा झया छत्तातिछत्ता, तेसिं[20] णं पेच्छाघरमंडवाणं पुरओ [21]पत्तेयं पत्तेयं मणिपेढि[22]याओ पण्णत्ताओ, [23]ताओ णं मणिपेढियातो सोल[24]स सोलस जोयणाइं आयामविक्खंभेणं [25]अट्ठ जोयणाइं बाहल्लेणं स[26]व्वमणिमईओ अच्छाओ पडिरूवाओ, [27]तासि णं उवरिं

---

पं० १४–] ५ तेषां च वज्रमयानामक्षपाटकानां ६ बहुमध्यदेशभागे ७ प्रत्येकं प्रत्येकं ८ मणिपीठिका प्रज्ञप्ता ९ ताश्च मणिपीठिकाः १० अष्ट योजनान्यायाम–विष्कम्भाभ्यां ११ चत्वारि योजनानि बाहल्येन–पिण्डभावेन १२ सर्वात्मना मणिमय्यः १३ 'अच्छाओ' इत्यादि विशेषणजातं प्रागिव [पृ० ९८ पं० ६]। १४ तासां च मणिपीठिकानामुपरि १५ प्रत्येकं प्रत्येकं १६ सिंहासनं प्रज्ञप्तं, १७ तेषां च सिंहासनानां वर्णनं परिवारश्च प्राग्वद् वक्तव्यः [पृ० ९८ पं० ८] १८ तेषां च प्रेक्षागृहमण्डपानामुपरि १९ अष्टावष्टौ मङ्गलकानि, बहवः कृष्णचामरध्वजा इत्यादि प्राग्वत् [पृ० १९ पं० ६–पृ० २० पं० ९] २० तेषां प्रेक्षागृहमण्डपानां पुरतः २१ प्रत्येकं प्रत्येकं २२ मणिपीठिकाः प्रज्ञप्ताः, २३ ताश्च मणिपीठिकाः प्रत्येकं प्रत्येकं २४ षोडश योजनान्यायाम–विष्कम्भाभ्याम् २५ अष्टौ योजनानि बाहल्येन २६ सर्वात्मना मणिमय्यः 'अच्छा' इत्यादि विशेषणकदम्बकं प्राग्वत् [पृ० ९८ पं० ६] २७ तासां

[28]पत्तेयं पत्तेयं *[29]थूभे पण्णत्ते, [30]ते णं *थूभा [31]सोलस सोलस जोयणाइं आयामविक्खंभेणं [32]साइरेगाइं सोलस सोलस जोयणाइं उड्ढं उच्चत्तेणं, सेया संखंक. . .[पृ० १७९ पं० ३] सव्वरयणामया अच्छा जाव पडिरूवा, [33]तेसि णं थूभाणं उवरिं [34]अट्ठट्ठ मंगलगा झया छत्तातिछत्ता जाव सहस्सपत्तहत्थया। तेसिं[35] णं थूभाणं [36]पत्तेयं पत्तेयं [37]चउद्दिसिं [38]मणिपेढियातो पण्णत्ताओ, ताओ णं मणिपेढियातो [39]अट्ठ जोयणाइं आयामविक्खंभेणं [40]चत्तारि जोयणाइं बाहल्लेणं [41]सव्वमणिमईओ अच्छाओ जाव पडिरूवातो, [42]तासि णं मणिपेढियाणं उवरिं

च मणिपीठिकानामुपरि २८ प्रत्येकं प्रत्येकं २९ चैत्यस्तूपः प्रज्ञप्तः, ३० ते च चैत्यस्तूपाः ३१ षोडश योजनान्यायाम–विष्कम्भाभ्यां ३२ सातिरेकाणि षोडश योजनान्यूर्ध्वमुच्चैस्त्वेन 'संखंक'–इत्यादि तद्वर्णनं सुगमम्, [पृ० १७९ पं० १२] ३३ तेषां च चैत्यस्तूपानामुपरि ३४ अष्टावष्टौ स्वस्तिकादीनि मङ्गलकानि 'जाव सहस्सपत्तहत्थया' इति 'यावत्' करणात्' तेसिं चेइयथूभाणं उप्पिं बहवे किण्हचामरज्झया [पृ० २५ पं० २ तथा पं० ९] तेसिं चेइयथूभाणं उप्पिं बहवे छत्ताइच्छत्ता ...[पृ० २१ पं० १ तथा ५] इति, एतच्च समस्तं प्राग्वत्। ३५ तेषां चैत्यस्तूपानां ३६ प्रत्येकं प्रत्येकं ३७ चतुर्दिशि–चतसृषु दिक्षु एकैकस्यां दिशि एकैकमणिपीठिकाभावेन चतस्रो ३८ मणिपीठिकाः प्रज्ञप्ताः ३९ अष्टौ योजनान्यायामविष्कम्भाभ्यां ४० चत्वारि योजनानि बाहल्येन ४१ सर्वात्मना मणिमय्यः 'अच्छा' इत्यादि प्राग्वत् [पृ० ९८ पं० ६] ४२ तासां च ० मणिपीठिकानामुपरि एकैकप्रतिमाभावेन

* "चेइयथूभा"–जीवा० पृ० २२४ पं० १४। ० मणिपीठिकानामुपरि एकैकस्या अपि मणिपीठिकाया उपरि एकैक–पा० ४–५।

[43]चत्तारि [44]जिणपडिमातो [45]जिणुस्सेहपमाणमेत्ताओ+ [46]संपलियंकनिसन्नाओ [47]थूभाभिमुहीओ [48]संनिखित्ताओ चिट्ठंति, तंजहा–[49]उसभा [50]वद्धमाणा [51]चंदाणणा [52]वारिसेणा [53]।

[१२५] तेसिं णं [1]थूभाणं पुरतो [2]पत्तेयं पत्तेयं [3]मणिपेढियातो पण्णत्ताओ, [4]ताओ णं मणिपेढियातो [5]सोलस जोयणाइं आयामविक्खंभेणं [6]अट्ठ जोयणाइं बाहल्लेणं [7]सव्वमणिमईओ जाव पडिरूवातो, [8]तासिं णं मणिपेढियाणं उवरिं [9]पत्तेयं पत्तेयं [10]चेइयरुक्खे पण्णत्ते, ते णं चेइयरुक्खा [11]अट्ठ जोयणाइं उड्ढं उच्चत्तेणं [12]अद्ध×जोयणं उव्वेहेणं, [13]दो जोयणाइं [14]खंधा [15]अद्धजोयणं विक्खंभेणं [16]छ जोयणाइं [17]विडिमा [18]बहुमज्झदेसभाए

४३ चतस्रो ४४ जिनप्रतिमाः ४५ जिनोत्सेधप्रमाणमात्राः जिनोत्सेध उत्कर्षतः पञ्च धनुःशतानि जघन्यतः सप्त हस्ताः, इह तु पञ्च धनुःशतानि सम्भाव्यन्ते, ४६ पर्यङ्कासनसन्निपण्णाः, ४७ स्तूपाभिमुख्यः ४८ सन्निक्षिप्ताः, तथा जगत्स्थितिस्वाभाव्येन सम्यग्निवेशितास्तिष्ठन्ति, ४९ तद्यथा–५० ऋषभाः ५१ वर्द्धमानाः ५२ चन्द्राननाः ५३ वारिषेणाः–इति।

[१२५] १ तेषां चैत्यस्तूपानां पुरतः २ प्रत्येकं प्रत्येकं ३ मणिपीठिकाः प्रज्ञप्ताः, ४ ताश्च मणिपीठिकाः ५ षोडश योजनान्यायामविष्कम्भाभ्याम् ६ अष्टौ योजनानि बाहल्यतः ७ 'सव्वमणिमईओ' इत्यादि प्राग्वत्, [पृ० ९८ पं० ६] ८ तासां च मणिपीठिकानामुपरि ९ प्रत्येकं प्रत्येकं १० चैत्यवृक्षाः ११ अष्टौ योजनान्यूर्ध्वमुच्चैस्त्वेन १२ अर्द्धयोजनमुद्वेधेन–उण्डत्वेन, १३ द्वे योजने उच्चैस्त्वेन १४ स्कन्धः स एव १५ अर्धं योजनं विष्कम्भतया १८ बहुमध्यदेशभागे १७ विडिमा–ऊर्ध्वं विनिर्गता शाखा सा

+ ओपलियंक–भा० १। × अट्ठ जोयणाइं–मु० पु० पाठः स च विवरणविरोधी।

[19]अट्ठ जोयणाइं -आयामवि[20]क्खंभेणं साइरे[21]गाइं अट्ठ जोयणाइं [22]सव्वग्गेणं पण्णत्ता, तेसिं[23] णं चेइयरुक्खाणं इमे[24]यारूवे वण्णावासे पण्णत्ते, तं[25]जहा-व[26]यरामयमूलरययसुपइट्ठियविडिमा रि[27]ट्ठामयविउलकंदवेरुलियरुइलखंधा [28]सुजायवरजायरूवपढमगविसालसाला नाणा[29]मणिमयरयणविविहसाहप्पसाहवेरुलियपत्ततवणिज्जपत्तबिंटा जं[30]बूणयरत्तमउयसुकुमालपवालपल्लववरंकुरधरा विचित्त[31]मणिरयणसुरभिकुसुमफलभरनमियसाला

ऊर्ध्वमुच्चैस्त्वेन १६ षड् योजनानि १९ अष्टौ योजनानि २० विष्कम्भेन २२ सर्वाग्रेण २१ सातिरेकेणाष्टौ योजनानि प्रज्ञप्ताः २३तेषां च चैत्यवृक्षाणाम् २४अयमेतद्रूपो वर्णावासः प्रज्ञप्तः २५तद्यथा-२६वज्राणि-वज्रमयानि मूलानि येषां ते वज्रमयमूला रजते सुप्रतिष्ठिता विडिमा-बहुमध्यदेशभागे ऊर्ध्वं विनिर्गता शाखा येषां ते रजतसुप्रतिष्ठितविडिमाः* २७ रिष्टमयो-रिष्टरत्नमयः कन्दो येषां ते रिष्टमयकन्दाः, तथा वैडूर्यरत्नमयो रुचिरः स्कन्धो येषां ते *तथा, २८ सुजातं-मूलद्रव्यशुद्धं वरं-प्रधानं यत् जातरूपं तदात्मकाः प्रथमका-मूलभूता विशालाः शालाः शाखा येषां ते सुजातवरजातरूपप्रथमकविशालशालाः २९ नानामणिरत्नात्मिका विविधाः शाखाः प्रशाखा येषां ते तथा वैडूर्याणि-वैडूर्यमयाणि पत्राणि येषां ते तथा तपनीयमयानि पत्रवृन्तानि येषां ते ○तथा, ३० जाम्बूनदा-जाम्बूनदसुवर्णविशेषमया रक्ता-रक्तवर्णा मृदवः-मनोज्ञाः सुकुमाराः-सुकुमारस्पर्शाः प्रवालाः-ईषदुन्मीलितपत्रभावाः पल्लवाः-संजातपरिपूर्णप्रथमपत्रभावरूपा वराङ्कुराः-प्रथममुद्भिद्यमाना अङ्कुरास्तान् धरन्तीति जाम्बूनदरक्तमृदुसुकुमारप्रवालपल्लवाङ्कुरधराः ३१ विचि- ॥११९॥

– नैतत् पद विवरणे । * "ततः पूर्वपदेन कर्मधारयः समासः"-राय० वि० । ○ "ततः पूर्ववत् पदद्वयमीलनेन कर्मधारयः" -राय० वि० ।

[32]सच्छाया [33]सप्पभा [34]सस्सिरीया [35]सउज्जोया [36]अहियं नयण-मणणिव्वुइकरा [37]अमयरससमरसफला पासाईया[38]...। तेसिं[39] णं चेइयरुक्खाणं उवरिं [40]अट्ठट्ठ मंगलगा झया छत्ताइछत्ता। तेसिं[41] णं चेइयरुक्खाणं पुरतो [42]पत्तेयं पत्तेयं [43]मणिपेढियाओ पण्णत्ताओ, [44]ताओ णं मणिपेढियाओ [45]अट्ठ जोयणाइं आयामविक्खंभेणं [46]चत्तारि जोयणाइं बाहल्लेणं

त्रमणिरत्नमयानि यानि सुरभीनि कुसुमानि फलानि च तेषां भरेण नमिताः शालाः-शाखा येषां ते तथा, तथा ३२ सती-शोभना छाया येषां ते सच्छायाः, ३३ सती-शोभना-प्रभा-कान्तिर्येषां ते सत्प्रभाः, अत एव ३४ सश्रीकाः, तथा ३५ सह उद्द्योतेन वर्त्तन्ते मणिरत्नानामुद्द्योतभावात् सोद्द्योताः, ३६ अधिकं नयन-मनोनिर्वृतिकराः ३७अमृतरससमरसानि फलानि येषां ते तथा, ३८'पासाईया' इत्यादिविशेषणचतुष्टयं प्राग्वत् [पृ०७ पं०१] एते× च चैत्यवृक्षा अन्यैर्बहुभिस्तिलक-लवक-च्छत्रौपग-शिरीष-सप्तपर्ण-दधिपर्ण-लुब्धक-धवल-चन्दन-नीप-कुटज-पनस-ताल-तमाल-प्रियाल-प्रियङ्गु-पारापत-राजवृक्ष-नन्दिवृक्षैः सर्वतः समन्तात् सम्परिक्षिप्ताः, ते च तिलका यावन्नन्दिवृक्षा मूलमन्तः कन्दमन्त इत्यादि सर्वमशोकपादपवर्णनामिव [पृ० १२ पं० २] तावद् वक्तव्यं यावत् परिपूर्णं लतावर्णनम् [पृ० १२पं० ४] ३९तेषां चैत्यवृक्षाणामुपरि ४०अष्टावष्टौ मङ्गलकानि बहवः कृष्णचामरध्वजा इत्यादि चैत्यस्तूप इव तावद् वक्तव्यं यावद् बहवः सहस्रपत्रहस्तकाः, सर्वरत्नमया यावत् प्रतिरूपका इति [पृ०८७ पं०७]४१ तेषां च चैत्यवृक्षाणां पुरतः ४२ प्रत्येकं ४३ मणिपीठिकाः प्रज्ञप्ताः, ४४ ताश्च मणिपीठिका ४५ अष्टौ योजनान्यायामविष्कम्भाभ्यां ४६ चत्वारि योजनानि बाह-

× अत आरभ्य 'यावत् प्रतिरूपकाः' [पं० ११] इत्यन्तस्य विवरणस्य मूलपाठो मूले न दृश्यते।

[47]सव्वमणिमईओ अच्छाओ जाव पडिरूवाओ, [48]तासि णं मणिपेढियाणं उवरिं [49]पत्तेयं पत्तेयं [50]महिंदज्झए पण्णत्ते, [51]ते णं महिंदज्झया [52]सट्ठिं जोयणाइं उड्ढं उच्चत्तेणं ○[53]अद्धकोसं उव्वेहेणं [54]अद्धकोसं विक्खंभेणं वइरामय[55]- [पृ०१०९ पं०२]-सिहरा पासादीया। तेसिं[56] णं महिंदज्झयाणं उवरि [57]अट्ठट्ठ मंगलगा [58]झया छत्तातिछत्ता [पृ० ८० पं० ३] तेसिं[59] णं महिंदज्झयाणं पुरतो [60]पत्तेयं पत्तेयं नंदा[61] पुक्खरिणीओ पण्णत्ताओ, ताओ णं पुक्खरिणीओ =एगं जोयणसयं[62] आयामेणं [63]पण्णासं जोयणाइं विक्खंभेणं दस[64] जोयणाइं उव्वेहेणं

ल्यतः ४७ 'सव्व-रयणामईओ' इत्यादि प्राग्वत् [पृ० ९८ पं ६] ४८ तासां च मणिपीठिकानामुपरि ४९ प्रत्येकं ५० महेन्द्रध्वजः प्रज्ञप्तः, ५१ते च महेन्द्रध्वजाः ५२षष्टियोजनान्यूर्ध्वमुच्चैस्त्वेन ५३अर्द्धक्रोशम्-अर्द्धगव्यूतमुद्वेधेन-उण्डत्वेन ५४अर्द्धक्रोशं विष्कम्भतः ५५ 'वइरा'...[पृ० १०९, पं० २-८] ५६तेषां महेन्द्रध्वजानामुपरि ५७ अष्टावष्टौ मङ्गलकानि ५८ बहवः कृष्णचामरध्वजा इत्यादि तोरणवत् सर्वं वक्तव्यम् [पृ० ८० पं० ९] ५९ तेषां च महेन्द्रध्वजानां पुरतः ६० प्रत्येकं ६१ नन्दा नन्दाभिधाना पुष्करिणी प्रज्ञप्ता, ६२एकं योजनशतमायामतः ६३पञ्चाशत् योजनानि विष्कम्भतः ६४ ○दश योजनान्युद्वेधेन-उण्डत्वेन, तासां च नन्दापुष्करिणीनां

○ अत्र सर्वप्रतिषु मु० पुस्तके च 'जोयण उव्वेहेण जोयण विक्खंभेणं' इति-एव पाठ उपलभ्यते, केवलम् भा० २ प्रतौ 'सट्ठि जोयणाइं उड्ढं उच्चत्तेण अद्धकोस उव्वेहेण, अद्धकोसं विक्खभेण' इति लभ्यते परतु भा० २ प्रतावपि मूलतस्तु 'जोयण' इत्यादिक एव पाठो दृश्यते, अनन्तर केनचित् शोधकेन मूल-विवरणयोर्वैषम्य परिहर्तुकामेन 'जोयणं' स्थाने 'अद्धकोसं' इति परिवर्तितं प्रतिभाति, अस्माभिस्तु मूल-विवरणयोः संवादाय विवरणानुसारी स शोधित एव पाठोऽत्र मूले न्यस्तः। = एग जोयणाइ विक्खभेण दस जोयणाइं उव्वेहेणं पा० १। ⁄ मूल-विवरणयोः पाठभेदः। ○ मु० पु० विवरणे तथा पा० ४-५, भा० १ प्रतौ च विवरणे 'द्वासप्ततियोजनानि' इत्येव पाठो लभ्यते किन्तु केवलं

[65]अच्छाओ-जाव वण्णओ-एगइयाओ उदगरसेणं पण्णत्ताओ, पत्तेयं पत्तेयं [66]पउमवरवेइयापरिखित्ताओ पत्तेयं पत्तेयं वणसंड[67]परिक्खित्ताओ [पृ० १९१ पं० २] [68]तासि णं णंदाणं पुक्खरिणीणं तिदिसिं[69] [70]तिसोवाणपडिरूवगा पण्णत्ता, तिसोवाणपडिरूवगाणं वण्णओ, तोरणा झया छत्तातिछत्ता। [71]सभाए णं सुहम्माए [72]अडयालीसं मणोगुलियासाहस्सीओ पण्णत्ताओ, [73]तंजहा-[74]पुरत्थिमेणं सोलससाहस्सीओ [75]पच्चत्थिमेणं सोलससाहस्सीओ [76]दाहिणेणं अट्ठसाहस्सीओ [77]उत्तरेणं [78]अट्ठसाहस्सीओ, [79]तासु णं मणोगुलियासु बहवे सुवण्णरुप्पमया फलगा पण्णत्ता, तेसु णं सुवन्नरुप्पमएसु फलगेसु बहवे वइरामया णागदंता पण्णत्ता, तेसु णं वइरामएसु णागदंतएसु किण्ह-सुत्तवट्टवग्घारियमल्लदामकलावा चिट्ठंति,

६५ 'अच्छाओ सण्हाओ रययामय'... इत्यादि वर्णनं प्राग्वत् [पृ० १९१ पं० २-७] ताश्च नन्दापुष्करिण्यः प्रत्येकं प्रत्येकं ६६ पद्मवरवेदिकया प्रत्येकं प्रत्येकं ६७ वनखण्डेन परिक्षिप्ताः, ६८ तासां च नन्दापुष्करिणीनां प्रत्येकं ६९ त्रिदिशि ७० त्रिसोपानप्रतिरूपक-तोरणवर्णनं प्राग्वत् [पृ० ७८ पं० ६-पृ० ८१ पं० १०] ७१ सभायां सुधर्म्मायाम् ७२ अष्टचत्वारिंशन्मनोगुलिकासहस्राणि-पीठिकासहस्राणि प्रज्ञप्तानि, ७३ तद्यथा-७४ पूर्वस्यां दिशि षोडश मनोगुलिकासहस्राणि, ७५ षोडश सहस्राणि पश्चिमायाम् ७६ अष्टौ सहस्राणि दक्षिणतः ७७ अष्टौ सहस्राणि उत्तरतः, ७९ एतासु च फलक-नागदन्तक-माल्यदामवर्णनं प्राग्वत् [पृ० १७६ पं० २-] सिक्कगवर्णनं

भा० २ प्रतावेव 'दश योजनानि' पाठः प्राप्तः स एव च पाठः मूलपाठानुसारी अत एव अत्र स्वीकृतः । विवरणे निर्दिष्टः 'द्वासप्ततियोजनानि' पाठोऽपि विशेषेण विचारणीयोऽस्ति नहि अविमृश्यैव विवरणकारेण एव निर्देशः कृतो भवेत् ।

संभाए णं सुहम्माए अडयालीसं गोमाणसियासाहस्सीओ पन्नत्ताओ, जह मणोगुलिया जाव णागदंतगा, तेसु
णं णागदंतएसु बहवे रययामया सिक्कगा पण्णत्ता, तेसु णं रययामएसु सिक्कगेसु बहवे वेरुलियामइओ धूवघ-
डियाओ पण्णत्ताओ, ताओ णं धूवघडियाओ कालागुरुपवर-जाव [पृ० १६४ पं ३] चिट्ठंति।

[१२६] सभाए णं सुहम्माए अंतो बहुसमरमणिज्जे भूमिभागे पण्णत्ते जाव मणीहिं उवसोभिए मणिफासो
य उल्लोयो य, तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महेगा मणिपेढिया पण्णत्ता
सोलस जोयणाइं आयामविक्खंभेणं अट्ठ जोयणाइं बाहल्लेणं सव्वमणिमयी जाव पडिरूवा। तीसे णं मणिपेढि-
याए उवरिं एत्थ णं माणवए चेइयखंभे पण्णत्ते,

---

८०सभायां सुधर्मायां ८१ अष्टाचत्वारिंशत् ८२गोमानसिकाः-शय्यारूपाः स्थानविशे-
षास्तेषां सहस्राणि प्रज्ञप्तानि, ८३तद्यथा-षोडश सहस्राणि पूर्वतः षोडश सहस्राणि पश्चिमायाम् अष्टौ सहस्राणि दक्षिणतः अष्टौ सहस्राणि
उत्तरतः, तास्वपि फलकवर्णनम् नागदन्तवर्णनम् सिक्ककगवर्णनम् धूपघटिकावर्णनं च द्वारवत् [पृ० १७६ पं० २, पृ०१६४ पं० २-३]
धूपघटिकावर्णनं द्वारवत् [पृ०१६४ पं० २-३]

[१२६] १ 'सभाए णं सुहम्माए' इत्यादिना भूमिभाग×वर्णनं उल्लोकवर्णनं च प्राग्वत् [पृ०८१, ९७ पं०३] २ तस्य बहुसमरम-
णीयस्य भूमिभागस्य ३ बहुमध्यदेशभागेऽत्र ४ महती एका मणिपीठिका प्रज्ञप्ता, ५ षोडश योजनान्यायाम-विष्कम्भाभ्याम् ६ अष्टौ
योजनानि बाहल्यतः ७ सर्वरत्नमयी इत्यादि प्राग्वत् [पृ० पं०] ८ तस्याश्च मणिपीठिकाया उपरि महानेको ९ माणवकनामा चैत्य-

---

× -वर्णन 'सभाए णं सुहम्माए इत्यादिना उल्लोकवर्णनं च प्रा-पा० ४-५ भा० २।

रायपसेणइयं।

सट्ठिं[10] जोयणाइं उड्ढं उच्चत्तेणं, जोयणं[11] उव्वेहेणं, जोयणं[12] विक्खंभेणं अडयालीसंअंसिए[13] अडयालीसइ[14]○कोडीए अडयालीसइविग्गहिए[15] सेसं जहा महिंदज्झयस्स[16] [पृ० पं०] माणवगस्स[17] णं चेइयखंभस्स उवरिं बारस[18] जोयणाइं ओगाहेत्ता हेट्ठावि[19] बारस जोयणाइं वज्जेत्ता *मज्झे[20] छत्तीसाए[21] जोयणेसु एत्थ णं बहवे[22] सुवण्णरूप्पमया फलगा पण्णत्ता, तेसु णं सुवण्णरुप्पामएसु फलएसु बहवे वइरामया णागदंता पण्णत्ता, तेसु णं वइरामएसु नागदंतेसु बहवे रययामया सिक्कगा पण्णत्ता, तेसु[23] णं रययामएसु सिक्कएसु बहवे वइरामया[24] गोलवट्टसमुग्गया[25] पण्णत्ता, तेसु[26] णं वयरामएसु गोलवट्टसमुग्गएसु बहवे[27] जिणसकहातो[28] संनिक्खित्ताओ चिट्ठंति। तातो णं सूरियाभस्स[29] ॥१२४॥

सिक्कोपरिस्थितसमुद्गकेषु देवपूज्यानि जिनसक्थीनि

स्तम्भः प्रज्ञप्तः, १० षष्टियोजनान्यूर्ध्वमुच्चैस्त्वेन ११ योजनमुद्वेधेन १२ योजनं विष्कम्भेण १३ अष्टाचत्वारिंशदस्रिकः १४ 'अडयालीसइकोडीए १५ अडयालीसइविग्गहिए' इत्यादि सम्प्रदायगम्यम्। 'वइरामयवट्ट' इत्यादि १६ महेन्द्रध्वजवत् वर्णनं निरवशेषं तावद् वक्तव्यं यावत् 'सहस्सपत्तहत्थगा सव्वरयणामया जाव पडिरूवा' इति [पृ०१०९ पं०२] तस्य च १७ माणवकस्य चैत्यस्तम्भस्य उपरि १८द्वादश योजनानि ○अवगाह्य-उपरितनभागात् द्वादश योजनानि वर्जयित्वेति भावः, १९अधस्तादपि द्वादश योजनानि वर्जयित्वा २० मध्ये २१ षट्त्रिंशति योजनेषु २२ 'बहवे सुवण्णरुप्पामया फलगा' इत्यादि फलकवर्णनम् नागदन्तवर्णनम् सिक्ककवर्णनं च प्राग्वत् [पृ० १७६ पं० २-९] २३ तेषु च रजतमयेषु सिक्ककेषु बहवो २४ वज्रमया २५ गोलवृत्ताः-गोलवद् वृत्ताः समुद्गकाः प्रज्ञप्ताः, २६ तेषु च वज्रमयेषु समुद्गकेषु २७ बहूनि २८ जिनसक्थीनि सन्निक्षिप्तानि तिष्ठन्ति, यानि २९ सूर्याभस्य देवस्य

○-कोडाकोडीए-भा० १। * मज्झे बत्तीसाए-मु० पु० पाठः, स च विवरण नानुसरति। ○ अवगम्य उ-भा० १।

देवस्स [30]अन्नेसिं च बहूणं देवाण य देवीण य [31]अच्चणिज्जाओ जाव [32]पज्जुवासणिज्जातो। माणवगस्स [33]चेइयखंभस्स उवरिं अट्ठट्ठ मंगलगा झया छत्ताइच्छत्ता।

[१२७] तस्स [1]माणवगस्स [2]चेइयखंभस्स [3]पुरत्थिमेणं एत्थ णं [4]महेगा [5]मणिपेढिया पण्णत्ता, [6]अट्ठ जोयणाइं आयामविक्खंभेणं [7]चत्तारि जोअणाइं बाहल्लेणं [8]सव्वमणिमई अच्छा जाव पडिरूवा, तीसे णं मणिपेढियाए उवरिं एत्थ णं महेगे [9]सीहासणे पण्णत्ते सीहासणवण्णतो सपरिवारो [पृ० ९८ पं० ३–] तस्स [10]णं माणवगस्स [11]चेइयखंभस्स [12]पच्चत्थिमेणं एत्थ णं [13]महेगा [14]मणिपेढिया पण्णत्ता [15]अट्ठ जोयणाइं आयामविक्खंभेणं



---

३० अन्येषां च बहूनां वैमानिकानां देवानां देवीनां च ३१ अर्चनीयानि चन्दनैः, वन्दनीयानि स्तुत्यादिना, पूजनीयानि पुष्पादिना, माननीयानि बहुमानतः, सत्करणीयानि वस्त्रादिना, कल्याणं मङ्गलं दैवतं चैत्यमितिबुद्ध्या ३२ पर्युपासनीयानि। ३३ 'तस्स णं चेइयखंभस्स उवरि बहवे अट्ठट्ठ मंगलगा' इत्यादि प्राग्वत् [पृ० १९ पं० ४–]

[१२७] १ तस्य माणवकस्य २ चैत्यस्तम्भस्य ३ पूर्वस्यां दिशि अत्र ४ महत्येका ५ मणिपीठिका प्रज्ञप्ता, सा च ६ अष्टौ योजनान्यायाम-विष्कम्भाभ्यां ७ चत्वारि योजनानि बाहल्येन ८ 'सव्वमणिमई' इत्यादि प्राग्वत् [पृ० १९ पं० ५] [९ –सिंहासनं प्रज्ञप्तम् सिंहासनवर्णनम् [पृ० ९८ पं० ३] शेषाणि च भद्रासनानि तत्परिवारभूतानि प्राग्वत् [कं० ४४]। १० तस्य माणवकनाम्नः ११ चैत्यस्तम्भस्य १२ पश्चिमायां दिशि अत्र १३ महती एका १४ मणिपीठिका प्रज्ञप्ता साऽपि १५ अष्टौ योजनानि आयाम–विष्क-

–[ ] एतच्चिह्नान्तर्गतः पाठः केवलं भा० १–२ प्रतावेव तथापि मूलानुसारित्वेन अत्र न्यस्तः।

देवशयनीयस्यवर्णकः

[16]चत्तारि जोयणाइं बाहल्लेणं सव्वमणिमया अच्छा जाव पडिरूवा, [17]तीसे णं मणिपेढियाए उवरिं एत्थ णं [18]महेगे देवसयणिज्जे पण्णत्ते, तस्सं णं देवसयणिज्जस्स इमेयारूवे वण्णावासे पण्णत्ते, तंजहा–णाणामणिमया पडिपाया[23] सोवण्णिया[24] पाया[25] णाणामणिमयाइं[26] पायसीसगाइं[27] जंबूणयामयाइं[28] गत्तगाइं[29] वइरामया[30] [31]संधी णाणामणिमए[32] ○विच्चे[33] रययामई[34] तूली[35] लोहियक्खमया[36] बिब्बोयणा[37] तवणिज्जमया[38] गंडोवहाणया[39] [40]से णं सयणिज्जे सालिंगणवट्टिए[41]

म्भाभ्यां १६ चत्वारि योजनानि बाहल्येन । 'सव्वमणिमया'इत्यादि प्राग्वत् ।] [पृ० ९८ पं० २ तथा पृ०१०२ पं० १] १७ तस्याश्च मणिपीठिकाया उपरि अत्र १८ महदेकं १९देवशयनीयं प्रज्ञप्तम्, २० तस्य च देवशयनीयस्य २१ अयमेतद्रूपो वर्णावासो–वर्णकनिवेशः प्रज्ञप्तः, तद्यथा–२२नानामणिमयाः २३+प्रतिपादा–मूलपादानां प्रतिविशिष्टोपष्टम्भकरणाय पादाः प्रतिपादाः, २४ सौवर्णिकाः–सुवर्णमयाः २५ पादाः–मूलपादाः, २६ नानामणिमयानि २७ पादशीर्षकाणि २८ जाम्बूनदमयानि २९ गात्राणि–×ईषा–आदीनि ३० वज्रमया–वज्ररत्नापूरिताः ३१ सन्धयः ३२ नानामणिमयं ३३ व्यूतं–विशिष्टवानम् ३४ रजतमयी ३५ तूली ३६ लोहिताक्षमयाणि ३७ 'बिब्बोयणा' इति उपधानकानि, आह च ○जीवाभिगममूलटीकाकारः–"बिब्बोयणा–उपधानकान्युच्यन्ते" [ ] इति, ३८ तपनीयमय्यो ३९ गण्डोपधानिकाः, ४० तद् देवशयनीयं ४१ सालिङ्गनवर्तिकम्–सह आलिङ्गनवर्त्या–शरीर-

○ पृ०९८ प०५ तथा १२। "वेञ्चं व्यूतं वानम् इत्यर्थः"–जीवा० वृ० प्र०पृ० २१० पं०६ । 'वान' शब्दस्य पर्यायः भाषायाम् 'वाण'–'खाटलानुं वाण'–इति । + भाषायाम्–पडवाया । × भाषायाम् ईषा–'ईस–खाटलानी ईस' इति प्रसिद्धम्। ○ जीवा० वृ०पृ० २३१ पं०१४।

[४२]उभओ बिब्बोयणं दु[४३]हतोउण्णते [४४]मज्झे णयगंभीरे गंगापुलिणवालुयाउ[४५]द्दालसालिसए सुविरइयरयत्ताणे [४६]उवचियखोमदुगुल्लपट्टपडिच्छायणे आईणग-रूय-बूर-णवणीय-तूलफासमउते [पृ० ९९ पं० २] रत्तं[४७]सुयसंवुए [४८]सुरम्मे पासादीये...पडिरूवे।

[१२८] त[१]स्स णं देवसयणिज्जस्स उत्त[२]रपुरत्थिमेणं महे[३]गा म[४]णिपेढिया पण्णत्ता, अ[५]ट्ठ जोयणाइं आयामविक्खंभेणं [६]चत्तारि जोअणाइं बाहल्लेणं सव्वमणि[७]मयी जाव पडिरूवा, [८]तीसे णं मणिपेढियाए



प्रमाणेनोपधानेन यत् तत् तथा, ४२ उभयतः–उभौ–शिरोऽन्त–पादान्तावाश्रित्य बिब्बोयणम्–उपधानं यत्र तत् उभयतोबिब्बोयणं ४३ उभयतउन्नतं ४४ मध्ये नतं च तत् निम्नत्वात् गम्भीरं च–महत्त्वान्नतगम्भीरं ४५ गङ्गापुलिनवालुकाया अवदालो–विदलनं पादादिन्यासे अधोगमनमिति भावः तेन 'सालिसए' इति सदृशकम् गङ्गापुलिनवालुकावदालसदृशकं, दृश्यते चायं प्रकारो हंसतूल्यादिष्विति, तथा ४६ 'उपचित'इति विशिष्टं परिकर्मितं क्षौमं–कार्पासिकं दुकूलं–वस्त्रं तदेव पट्टः उपचितक्षौमदुकूलपट्टः स प्रतिच्छदनं–आच्छादनं यस्य तत् तथा प्राग्वत् [पृ० ९९ पं० ९] ४७ रक्तांशुकेन संवृतं रक्तांशुकसंवृतम्–अत एव ४८ सुरम्यम् 'पासादीये' इत्यादिपदचतुष्टयं प्राग्वत् [पृ० ७ पं० ५]।

[१२८] १ तस्य देवशयनीयस्य २ उत्तरपूर्वस्यां दिशि अत्र ३ महत्येका ४ मणिपीठिका प्रज्ञप्ता, सा च ५ अष्टौ योजनान्यायाम–विष्कम्भाभ्यां ६ चत्वारि योजनानि बाहल्यतः ७ 'सव्वमणिमयी' इत्यादि प्राग्वत् [पृ० १९ पं० ८] ८ तस्याश्च मणिपीठिकाया

सूर्याभस्य प्रहरण-कोशः

उवरिं एत्थ णं महेगे खुड्डएं[10] महिंदज्झए पण्णत्ते सट्ठिं जोयणाइं उड्ढं उच्चत्तेणं जोयणं विक्खंभेणं वइरामया वट्ट-लट्ठसंठियसुसिलिट्ठ-जाव-पडिरूवा, [पृ० १०९ पं० २] उवरिं अट्ठट्ठ मंगलगा झया छत्तातिच्छत्ता, तस्स[11] णं खुड्डागमहिंदज्झयस्स पच्चत्थिमेणं[12] एत्थ णं सूरियाभस्स[13] देवस्स चोप्पाले[14] नाम पहरणकोसे[15] पन्नत्ते सव्ववइरामए अच्छे जाव पडिरूवे, तत्थ[16] णं सूरियाभस्स देवस्स फलिहरयण[17]-खग्ग[18]-गया[19]-धणुप्पमुहा[20] बहवे पहरणरयणा[21] संनिखित्ता[22] चिट्ठंति, उज्जला[23] निसिया[24] सुतिक्खधारा[25] पासादीया...। सभाए[26] णं सुहम्माए उवरिं अट्ठट्ठ[27] मंग-लगा झया छत्तातिच्छत्ता।

[१२९] सभाए[1] णं सुहम्माए उत्तरपुरत्थिमेणं[2] एत्थ णं महेगे[3] सिद्धायतणे[4] पण्णत्ते एगं[5] जोयणसयं आयामेणं पन्नासं

९ उपरि १० क्षुल्लको महेन्द्रध्वजः प्रज्ञप्तः, तस्य प्रमाणं वर्णकश्च महेन्द्रध्वजवद् वक्तव्यम् [पृ० २२१ पं० २] ११ तस्य क्षुल्लकमहेन्द्रध्वजस्य १२ पश्चिमायामत्र १३ सूर्याभस्य देवस्य महानेकः १४ चोप्पालो नाम १५ प्रहरणकोशः-प्रहरणस्थानं प्रज्ञप्तम्, किंविशिष्टः? इत्याह-जाव पडिरूवे' इति प्राग्वत् [पृ० १९ पं० ८] १६ तत्र चोप्पालकाभिधाने प्रहरणकोशे बहूनि १७ परिघरत्न-१८ खड्ग-१९ गदा-२० धनुःप्रमुखादीनि २१ प्रहरणरत्नानि २२ सन्निक्षिप्तानि तिष्ठन्ति, कथंभूतानि ? इत्यत आह-२३ उज्ज्व-लानि-निर्मलानि २४निशितानि-अतितेजितानि अत एव २५ तीक्ष्णधाराणि प्रासादीयानि इत्यादि प्राग्वत् [पृ० ७ पं० ९] तस्याश्च २६ सभायाः सुधर्माया उपरि बहूनि २७ अष्टावष्टौ मङ्गलकानि-इत्यादि सर्वं प्राग्वत् [पृ० १९ पं० ४] वक्तव्यम् ।

[१२९] १ सभायाः सुधर्मायाः २ उत्तरपूर्वस्यां दिशि ३ महदेकं ४ सिद्धायतनं प्रज्ञप्तम्, ५ एकं योजनशतमायामतः ६ पञ्चा-

जोयणाइं विक्खंभेणं बावँत्तरिं जोयणाइं उड्ढं उच्चत्तेणं सभागमएणं जाव गोमाणसियाओ भूमिंभागा उल्लोया तहेव। तस्सं णं सिद्धायतणस्स बहुमज्झदेसभाए एत्थ णं[11] महेगा मणिपेढिया पण्णत्ता, सोलसं[12] जोयणाइं आयामविक्खंभेणं[13] अट्ठ जोयणाइं बाहल्लेणं, [14]तीसे णं मणिपेढियाए उवरिं एत्थ णं[15] महेगे देवच्छंदए[16] पण्णत्ते, सोलस जोयणाइं आयामविक्खंभेणं साइरेगाइं[18] सोलस जोयणाइं उड्ढं उच्चत्तेणं

शत् विष्कम्भतः ७ द्वासप्ततिर्योजनान्यूर्ध्वमुच्चैस्त्वेन–इत्यादि ८सर्वं सुधर्मावत् वक्तव्यं यावत् गोमानसीवक्तव्यता [पृ० २१४ पं० १–पृ० २२३ पं० १] तथा चाह–'सभागमएणं जाव गोमाणसियाओ' इति, किमुक्तं भवति ?–यथा सुधर्मायाः सभायाः पूर्वदक्षिणोत्तरवर्त्तीनि त्रीणि द्वाराणि तेषां च द्वाराणां पुरतो मुखमण्डपाः तेषां च मुखमण्डपानां पुरतः प्रेक्षागृहमण्डपाः तेषां च प्रेक्षागृहमण्डपानां पुरतश्चैत्यस्तूपाः सप्रतिमाः तेषां च चैत्यस्तूपानां पुरतः चैत्यवृक्षाः तेषां च चैत्यवृक्षाणां पुरतो महेन्द्रध्वजाः तेषामपि पुरतो नन्दापुष्करिण्यस्तदनन्तरं गुलिका गोमानस्यश्चोक्ताः तथाऽत्रापि सर्वमनेनैव क्रमेण निरवशेषं वक्तव्यम्, ९ उल्लोकवर्णनं भूमिभागवर्णनं च प्राग्वत् [पृ० ८१, ९७ पं० ३] १० तस्य सिद्धायतनस्यान्तर्बहुमध्यदेशभागेऽत्र ११ महत्येका मणिपीठिका प्रज्ञप्ता, सा १२ षोडश योजनान्यायामविष्कम्भाभ्याम् १३ अष्टौ योजनानि बाहल्यतः '⊖ सव्वमणिमयी' इत्यादि प्राग्वत् [पृ० २१८ पं० ३] १४ तस्याश्च मणिपीठिकाया उपरि अत्र १५ महानेको १६ देवच्छन्दकः प्रज्ञप्तः स च १७ षोडश योजनान्यायामविष्कम्भाभ्यां १८ सातिरेकाणि षोडश

⊖ नैतत् पद मूलपाठे।

॥२३०॥ सव्वरयणामए[१९] जाव पडिरूवे ४एत्थं[२०] णं अट्ठसयं[२१] जिणपडिमाणं[२२] जिणुस्सेहप्पमाणमित्ताणं[२३] संनिखित्तं[२४] संचिट्ठति[२५], [२६]तासि णं जिणपडिमाणं[२७] इमेयारूवे[२८] वण्णावासे पण्णत्ते, तंजहा–[३०]तवणिज्जमया हत्थतल–पायतला[३१], अंकामयाइं[३२] [३३]नक्खाइं [३४]अंतोलोहियक्खपडिसेगाइं, कणगामईओ[३५] जंघाओ[३६], कणगामया[३७] जाणू[३८], कणगामया[३९] ऊरू[४०], कणगामईओ[४१] गायलट्ठीओ[४२], तवणिज्जमयाओ[४३] नाभीओ[४४], रिट्ठामइओ[४५] रोमराईओ[४६], तवणिज्जमया[४७] चुचुया[४८], तवणिज्जमया[४९] सिरिवच्छा[५०], सिलप्पवालमया[५१] ओट्ठा[५२], फालियामया[५३] दंता[५४], तवणिज्जमईओ[५५] जीहाओ[५६], तवणिज्जमया[५७] तालुया[५८], कणगामईओ[५९] नासिगाओ[६०] अंतोलोहियक्खपडिसेगाओ[६१], अंकामयाणि[६२]

जिनप्रतिमाः तासां वर्णकश्च

योजनान्यूर्ध्वमुच्चैस्त्वेन १९ 'सव्वरयणामए' इत्यादि प्राग्वत् [पृ० १९ पं० ५] २० तत्र च देवच्छन्दके २१ अष्टशतं अष्टाधिकं शतं २२जिनप्रतिमानां २३जिनोत्सेधप्रमाणमात्राणाम्–पञ्चधनुःशतप्रमाणानामिति भावः, २४सन्निक्षिप्तं २५तिष्ठति। २६ तासां २७जिनप्रतिमानाम् २८अयमेतद्रूपो २९ वर्णावासो वर्णकनिवेशः प्रज्ञप्तः, ३० तपनीयमयानि ३१ हस्ततल–पादतलानि ३२ अङ्करत्नमया ३४ अन्तः–मध्ये लोहिताक्षरत्नप्रतिसेका ३३ नखाः ३५ कनकमय्यो ३६ जङ्घाः ३७ कनकमयानि ३८ जानूनि ३९ कनकमया ४० ऊरवः ४१कनकमय्यो ४२गात्रयष्टयः ४३ तपनीयमय्यो ४४ नाभयः ४५रिष्टमय्यो ४६ रोमराजयः ४७तपनीयमयाः ४८ चुचुकाः–स्तनाग्रभागाः ४९ तपनीयमयाः ५० श्रीवृक्षाः ५१ शिलाप्रवालमया–विद्रुममया ५२ ओष्ठाः ५३ स्फटिकमया ५४ दन्ताः ५५ तपनीयमय्यो ५६ जिह्वाः ५७ तपनीयमयानि ५८ तालुकानि ५९ कनकमय्यो ६० नासिकाः ६१ अन्तर्लोहिताक्षप्रतिसेकाः, ६२ अङ्क-

४ अत आरभ्य सपूर्णा कण्डिका जीवा० मू० पृ० २२२ प० ९।

अ[63]च्छीणि अंतोलो[64]हियक्खपडिसेगाणि [×रिट्ठामईओ ताराओ] रिट्ठा[65]मयाणि अच्छिपत्ता[66]णि, रिट्ठा[67]मईओ भमुहा[68]-ओ कण[69]गामया कवोला[70], कण[71]गामया सव[72]णा, कण[73]गामईओ णिडाल[74]पट्टियातो, वइरा[75]मईओ सीस[76]घडीओ तव[77]णि-ज्जमईओ केसंत[78]केसभूमीओ रिट्ठा[79]मया उव[80]रि मुद्धया।

[१३०] ○तासिं[1] णं जिणपडि[2]माणं पिट्ठतो[3] पत्तेयं पत्तेयं छत्तधार[4]गपडिमाओ पण्णत्ताओ, ताओ णं छत्तधारगपडिमाओ हिमरय[5]यकुंदेंदुप्पगासाइं सकोरंट[6]मल्लदामधवलाइं आय[7]वत्ताइं सलीलं[8] धारेमाणीओ[9] धारेमाणीओ [10]चिट्ठंति, [11]तासि णं जिणप[12]डिमाणं उभ[13]ओ पासे प[14]त्तेयं पत्तेयं

मयानि ६३ अक्षीणि ६४अन्तर्लोहिताक्षप्रतिसेकानि, ६५रिष्टरत्नमयानि ६६अक्षिपत्राणि ६७रिष्टरत्नमय्यो ६८ भ्रुवः ६९ कनकमयाः ७० कपोलाः ७१ कनकमयाः ७२ श्रवणाः ७३ कनकमय्यो ७४ ललाटपट्टिकाः ७५ वज्रमय्यः ७६ शीर्षघटिकाः ७७ तपनीयमय्यः ७८ केशान्तकेशभूमयः, केशान्तभूमयः केशभूमयश्चेति भावः, ७९ रिष्टमया ८० उपरि मूर्द्धजाः–केशाः।

[१३०] १ तासां २ जिनप्रतिमानां ३ पृष्ठत एकैका ४ * छत्रधराणां प्रतिमा ५ हिमरजतकुन्देन्दुप्रकाशं ६ सकोरण्टमाल्यदामधवलम् ७ आतपत्रं गृहीत्वा ८ सलीलं ९ धरन्ती १० तिष्ठति, तथा ११ तासां १२ जिनप्रतिमानां १४ प्रत्येकम् १३ उभयोः पार्श्वयोः

× [ ] एतच्चिह्नान्तर्गतः पाठः वि० बा०। जीवा० मू० प्र० पृ० २३२ प० १। ○ इयं संपूर्णाऽपि कण्डिका जीवा० मू० प्र० पृ० २३२ पं० ५। * छत्रधरा प्र–पा० ४–५ भा० १।

जिनप्रतिमानां पुरतः नागयक्ष–भूतादिप्रतिमाः तथा घण्टादिपदार्थाश्च

चामर[15]धारपडिमाओ पण्णत्ताओ, [16]ताओ णं चामरधारपडिमातो चंद[17]प्पहवयरवेरुलियनानामणिरयणखचियचित्तदं[18]डाओ सुहुम[19]रयतदीहवालाओ संखंककुंददगरयअमतमहियफेणपुंजसन्निकासाओ धवलाओ चामराओ [पृ० १७९ पं०२–] सलीलं धारेमाणीओ धारेमाणीओ चिट्ठंति, [20]तासि णं जिण[21]पडिमाणं पुर[22]तो [23]दो दो नागपडिमा[24]तो जक्ख[25]पडिमाओ भूय[26]पडिमातो कुंडधार[27]पडिमाओ सव्वरयणामईओ अच्छाओ जाव चिट्ठंति, [28]तासि णं जिण[29]पडिमाणं पुर[30]तो अट्ठ[31]सयं घंटा[32]णं अट्ठ[33]सयं चंदणक[34]लसाणं अट्ठ[35]सयं भिंगा[36]राणं एवं आयं[37]साणं

द्वे द्वे १५ चामरधरे प्रतिमे प्रज्ञप्ते, १६ = ते च १७ चन्द्रप्रभः–चन्द्रकान्तो वज्रं वैडूर्यं च प्रतीतं चन्द्रप्रभवज्रवैडूर्याणि, शेषाणि च नानामणिरत्नानि खचितानि येषु दण्डेषु ते तथा, एवंरूपाः १८ चित्रा–नानाप्रकारा दण्डा येषां तानि तथा १९ सूक्ष्मा रजतमया दीर्घा वाला येषां तानि तथा [पृ० १७९ अंक–१०२] १९ प्रतीतम् चामराणि गृहीत्वा सलीलं वीजयन्त्यस्तिष्ठन्ति, ताश्च 'सव्वरयणामईओ अच्छाओ'इत्यादि प्राग्वत् [पृ० १७९ पं० ८–] २० तासां २१ जिनप्रतिमानां २२ पुरतो २३ द्वे द्वे २४ नागप्रतिमे द्वे द्वे २५ यक्षप्रतिमे द्वे द्वे २६ भूतप्रतिमे द्वे द्वे २७ कुण्डधरे प्रतिमे सन्निक्षिप्ते तिष्ठतः, तस्मिंश्च देवच्छन्दके २८ तासां २९ जिनप्रतिमानां ३० पुरतः ३१ अष्टशतं ३२ घण्टानाम् ३३ अष्टशतं ३४ चन्दनकल≈शानाम् ३५ अष्टशतं ३६ भृङ्गाराणाम् अष्टशतम्–३७ आदर्शा-

= "सूत्रे क्लीव+ प्राकृतत्वात्"–राय० विव०। ≈ –शानाम् अष्टशतं मङ्गल्यकलशानाम् अ–भा०२।

+ 'चामर' शब्दस्य

[38]थालाणं [39]पाईणं [40]सुपइट्ठाणं [41]मणोगुलियाणं [42]वायकरगाणं [43]चित्तगराणं [44]रयणकरंडगाणं [45]हयकंठाणं जाव [पृ० १७७ पं० ५] [46]उसभकंठाणं [47]पुप्फचंगेरीणं जाव [पृ० १७८ पं० १] [48]लोमहत्थचंगेरीणं [49]पुप्फपडलगाणं [50]तेल्लसमुग्गाणं जाव [पृ० १८० पं० १] [51]अंजणसमुग्गाणं अट्ठसयं [52]झयाणं अट्ठसयं

---

नाम् अष्टशतं ३८ स्थालानाम् अष्टशतं ३९ पात्रीणाम् अष्टशतं ४० सुप्रतिष्ठानानाम् अष्टशतं ४१ मनोगुलिकानां–पीठिकाविशेषाणाम् अष्टशतं ४२ वातकरकाणाम् अष्टशतं ४३ चित्राणां ४४ रत्नकरण्डकानाम् अष्टशतं ४५ हयकण्ठानाम् अष्टशतं गजकण्ठानाम् अष्टशतं नरकण्ठानाम् अष्टशतं किन्नरकण्ठानाम् अष्टशतं किंपुरुषकण्ठानाम् अष्टशतं महोरगकण्ठानाम् अष्टशतं ४६ वृषभकण्ठानाम् अष्टशतं ४७ पुष्पचङ्गेरीणाम् अष्टशतं माल्यचङ्गेरीणाम् , मुकुलानि पुष्पाणि, ग्रथितानि माल्यानि, अष्टशतं चूर्णचङ्गेरीणाम् अष्टशतं गन्धचङ्गेरीणाम् अष्टशतं वस्त्रचङ्गेरीणाम् अष्टशतमाभरणचङ्गेरीणाम् अष्टशतं सिद्धार्थकचङ्गेरीणाम् अष्टशतं ४८ लोमहस्तकचङ्गेरीणाम्, लोमहस्तकं च मयूरपुच्छपुञ्जनिका, अष्टशतं ४९ पुष्पपटलकानाम् एवं माल्य–चूर्ण–गन्ध–वस्त्राभरण–सिद्धार्थक–लोमहस्तक–पटलकानामपि प्रत्येकं प्रत्येकं अष्टशतं वक्तव्यम् अष्टशतं सिंहासनानाम् अष्टशतं छत्राणाम् अष्टशतं चामराणाम् अष्टशतं ५० तैलसमुद्गकानाम् अष्टशतं कोष्ठसमुद्गकानाम् अष्टशतं पत्रसमुद्गकानाम् अष्टशतं चोयकसमुद्गकानाम् अष्टशतं तगरसमुद्गकानाम् अष्टशतम्–एलासमुद्गकानाम् अष्टशतं हरितालसमुद्गकानाम् अष्टशतं हिंगुलकसमुद्गकानाम् अष्टशतं मनःशिलासमुद्गकानाम् अष्टशतम्–५१ अञ्जनसमुद्गकानाम् सर्वाण्यपि अमूनि तैलादीनि परमसुरभिगन्धोपेतानि, अष्टशतं ५२ ध्वजानाम्। अत्र सङ्ग्रहणिगाथा–

"चंदणकलसा भिंगारगा य आयंसया य थाला य। पातीउ सुपइट्ठा मणगुलिका वायकरगा य ॥१॥

धूव[53]कडुच्छुयाणं[54] संनिखित्तं [55]चिट्ठति, सिद्धायतण[56]स्स णं उव[57]रिं [58]अट्ठट्ठ मंगल[59]गा [60]झया छत्तातिच्छत्ता[61]।

[१३१] [1]तस्स णं सिद्धा[2]यतणस्स [3]उत्तरपुरत्थिमे णं एत्थ णं [4]महेगा उव[5]वायसभा पण्णत्ता, जहा सभाए सुहम्माए तहेव जाव मणिपेढिया अट्ठ जोयणाइं देवसयणिज्जं तहेव सयणिज्जवण्णओ अट्ठट्ठ मंगलगा झया छत्तातिछत्ता। तीसे णं उव[10]वायसभाए उत्तरपुरत्थिमेणं[11] एत्थ णं महेगे[12] हरए[13] पण्णत्ते

---

चित्ता रयणकरंडा हय-गय-नरकंठगा य चंगेरी। पडलग-सीहासण-छत्त-चामरा समुग्गय-झया य ॥२॥

अष्टशतं ५३ धूप*कडुच्छुकानां ५४ सन्निक्षिप्तं ५५ तिष्ठति, तस्य च ५६ सिद्धायतनस्य ५७ उपरि ५८ अष्टावष्टौ ५९ मङ्गलकानि ६० ध्वज-६१ छत्रातिच्छत्रादीनि तु प्राग्वत् [पृ० १९ पं० ४]।

[१३१] १तस्य च २सिद्धायतनस्य ३उत्तरपूर्वस्यामत्र ४ महत्येका ५उपपातसभा प्रज्ञप्ता, ६ तस्याश्च सुधर्मागमेन स्वरूपवर्णन-पूर्वादिद्वारत्रयवर्णन-मुखमण्डप-प्रेक्षागृहमण्डपादिवर्णनादिप्रकाररूपेण तावद् वक्तव्यं यावत् उल्लोकवर्णनम् [पृ० २१४ पं० ३-] तस्याश्च बहुसमरमणीयभूमिभागस्य बहुमध्यदेशभागेऽत्र महत्येका ७ मणिपीठिका प्रज्ञप्ता, सा च ८ अष्टौ योजनान्यायाम-विष्कम्भाभ्यां चत्वारि योजनानि बाहल्येन 'सव्वमणिमयी' इत्यादि प्राग्वत् [पृ०२१७ पं० ४] तस्याश्च मणिपीठिकाया उपरि अत्र महदेकं देवशयनीयं प्रज्ञप्तम्, तस्य स्वरूपं यथा सुधर्मायां सभायां देवशयनीयस्य [पृ० २२६ पं० २] तस्या अप्युपपातसभाया उपरि अष्टाष्ट मङ्गलकादीनि प्राग्वत् [पृ० १९ पं० ४] ९ तस्या १० उपपातसभाया ११ उत्तरपूर्वस्यां दिशि १२ महानेको १३ ह्रदः प्रज्ञप्तः, स च

---

* -कडुच्छ्का—पा० ४।-कडुछा-भा० १। भाषायाम् 'कडछो' 'कडछी'।

[14]एगं जोयणसयं आयामेणं [15]पण्णासं जोयणाइं विक्खंभेणं [16]दसं जोयणाइं उव्वेहेणं तहेव [17]से णं हरए [18]एगाए पउमवरवेइयाए [19]एगेणं वणसंडेण [20]सव्वओ समंता संपरिक्खित्ते। तस्स णं हरयस्स तिदिसं तिसोवाणपडिरूवगा पन्नत्ता। [21]तस्स णं हरयस्स [22]उत्तरपुरत्थिमे णं [23]एत्थ णं [24]महेगा [25]अभिसेगसभा पण्णत्ता, [26]सुहम्मागमएणं जाव [27]गोमाणसियाओ [28]मणिपेढिया [29]सीहासणं [30]सपरिवारं जाव दामा चिट्ठंति, [31]तत्थ णं [32]सूरियाभस्स देवस्स

१४एकं योजनशतमायामतः १५ पञ्चाशत् योजनानि विष्कम्भतः १६ दश योजनान्युद्वेधेन 'अच्छे रययामयकूले'इत्यादि नन्दापुष्करिण्या इव वर्णनं निरवशेषं वक्तव्यम् [पृ० १९१ पं०२] १७ स ह्रद १८ एकया पद्मवरवेदिकया १९ एकेन च वनखण्डेन २० सर्वतः समन्तात् संपरिक्षिप्तः, पद्मवरवेदिकावर्णनं [पृ० २०४ पं० १] वनखण्डवर्णनं च प्राग्वत् [पृ० १८३ पं० १] २१तस्य च ह्रदस्य÷ २२ उत्तरपूर्वस्यां दिशि २३ अत्र २४ महत्येका २५ अभिषेकसभा प्रज्ञप्ता, सा च २६ सुधर्मासभावत् प्रमाण–स्वरूप–द्वारत्रय–मुखमण्डपादिप्रकारेण तावद् वक्तव्या यावद् २७ गोमानसीवक्तव्यता [पृ० २१४ पं० १–पृ० २२३ पं० १] तदनन्तरं तथैव उल्लोकवर्णनम् भूमिभागवर्णनं च तावत् यावन्मणीनां स्पर्शः [पृ० ९७, ८१ पं० ३ कं० ४०] तस्या अभिषेकसभाया बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे महत्येका २८ मणिपीठिका प्रज्ञप्ता, साऽप्यष्टौ योजनान्यायाम–विष्कम्भाभ्यां चत्वारि योजनानि बाहल्यतः 'सव्वरयणामयी' इत्यादि प्राग्वत् [पृ० २१७ पं० ४] तस्या मणिपीठिकाया उपरि अत्र महदेकं २९ सिंहासनम् सिंहासनवर्णकः प्राग्वत् [पृ० ९८ पं० ३] नवरमत्र ३० परिवारभूतानि भद्रासनानि च वक्तव्यानि [कं० ४४] ३१ तस्मिंश्च सिंहासने ३२ सूर्याभस्य

÷ –स्य पूर्वस्यां दि–पा० ५।

सुबहु[33] अभिसेयभंडे[34] संनिखित्ते चिट्ठइ, अट्ठट्ठ मंगलगा तहेव। [35]तीसे णं अभिसेगसभाए उत्तरपुरत्थिमेणं[36] एत्थ णं अलंकारियसभा[37] पण्णत्ता जहा[38] सभा सुधम्मा, मणिपेढिया अट्ठ जोयणाइं सीहासणं सपरिवारं, तत्थ[39] णं सूरियाभस्स देवस्स सुबहु अलंकारियभंडे[40] संनिखित्ते चिट्ठति, सेसं तहेव, [41]तीसे णं अलंकारियसभाए उत्तरपु[42]रत्थिमे णं तत्थ णं महेगा[43] ववसायसभा[44] पण्णत्ता, जहा[45] उववायसभा जाव सीहा-सणं सपरिवारं मणिपेढिया अट्ठट्ठ मंगलगा०, तत्थ[46] णं सूरियाभस्स देवस्स एत्थ महेगे[47] पोत्थयरयणे[48] सन्निखित्ते चिट्ठइ, तस्स[49] णं पोत्थयरयणस्स इमेयारूवे[50]

देवस्य ३३ सुबहु ३४ अभिषेकभाण्डम्–अभिषेकयोग्य उपस्करः सन्निक्षिप्तः तिष्ठति, 'तीसे णं अभिसेयसभाए अट्ठट्ठ मंगलका' इत्यादि प्राग्वत् [पृ० १९ पं० ४] ३५ तस्याश्च अभिषेकसभाया ३६ उत्तरपूर्वस्यां दिशि अत्र महत्येका ३७ अलंकारसभा प्रज्ञप्ता, सा ३८ चाभिषेक+सभावत् प्रमाण–स्वरूप–द्वारत्रय–मुखमण्डप–प्रेक्षागृहमण्डपादिवर्णकप्रकारेण तावद् वक्तव्या यावत् परिवारसिंहासनम् [पृ० २१४ पं० १] ३९ तत्र सूर्याभस्य देवस्य ४० आलङ्कारिकम्–अलङ्कारयोग्यं भाण्डं संनिक्षिप्तमस्ति, शेषं प्राग्वत् [प्र० पृ० पं० १] ४१ तस्याश्च अलङ्कारसभाया ४२ उत्तरपूर्वस्यां दिशि अत्र ४३ महत्येका ४४ व्यवसायसभा प्रज्ञप्ता, सा च ४५ =अभिषेकसभावत् प्रमाण–स्वरूप–द्वारत्रय–मुखमण्डपादिवर्णनप्रकारेण तावद् वक्तव्या यावत् सिंहासनं सपरिवारम् [पृ० २१४ पं०१ पृ० २१६ पं० ३ ] ४६ तत्र ४७ महदेकं ४८ पुस्तकरत्नं सन्निक्षिप्तमस्ति, ४९ तस्य च पुस्तकरत्नस्य ५० अयमेतद्रूपो

– –सण अपरि–भा० १। + मूल–विवरणपाठयोर्भेदः। = मूले तु 'जहा उववायसभा' इत्युक्तम्। जीवा० पृ० २३५ पं० ८–"ववसातसभा

वण्णावासे[५१] पण्णत्ते, +तंजहा रिट्ठा[५२]ϴमईयो कंबिआओ[५३] *[तवणिज्जमए] [५४]दोरे≡ नाणामणिमए[५५] गंठी[५६] रयणा[५७]मयाइं पत्तगाइं[५८] वेरुलियमए[५९] लिप्पासणे[६०] रिट्ठामए[६१] छंदणे[६२] तवणिज्जमई[६३] संकला[६४] रिट्ठामई[६५] मसी[६६] वइरामई[६७] लेहणी[६८] रिट्ठामयाइं[६९] अक्खराइं धम्मिए[७१] लेक्खे। ववसायसभाए णं उवरिं अट्ठट्ठ मंगलगा, [७२]तीसे णं ववसायसभाए

५१ वर्णावासो वर्णकनिवेशः प्रज्ञप्तः, ५२ रिष्टमय्यौ–रिष्टरत्नमय्यौ ५३ ○कम्बिके○ पृष्ठके इति भावः, रत्नमयो ५४ *दवरको यत्र पत्राणि प्रोतानि सन्ति, ५५ नानामणिमयो ५६ ग्रन्थिः दवरकस्यादौ येन पत्राणि न निर्गच्छन्ति, ५७ अङ्कमयानि–अङ्करत्नमयानि ५८ पत्राणि, ५९ नानामणिमयं ६० लिप्यासनम्–मषीभाजनमित्यर्थः, ६३ तपनीयमयी ६४ शृङ्खला मषीभाजनसत्का, ६१ रिष्टरत्नमयं उपरितनं तस्य ६२ छादनं ६५ रिष्टमयी–रिष्टरत्नमयी ६६ मषी, ६७ वज्रमयी ६८ लेखनी, ६९ रिष्टमयानि ७० अक्षराणि, ७१ धार्मिकं लेख्यं, ×क्वचित्–'धम्मिए 8सत्थे'इति पाठः तत्र 'धार्मिकं शास्त्रम्'इति व्याख्येयम् ७२ तस्याश्च ≈उप-

पण्णत्ता अभिसेयसभावत्तव्वया जाव सीहासणं अपरिवार" इत्यादि। + इदं समस्तं पुस्तकवर्णनं जीवा० मू० पृ० २३५ पं० ९। ϴ –मयाइं उक्कंठियाइं त–भा० १। * वि० बा०। अत्र पुस्तकवर्णने मूल–विवरणयोर्भेदः मूलपाठव्युत्क्रमश्च भासते। ≡ "देशीनाममालायां 'दार–दोर' शब्दौ कटीसूत्रापरपर्यायकाञ्चीवाचकौ लभ्येते–"कंचीई दार–दोरा य"–व० ५ गा० ३८। अत्र तु 'दोर' शब्दः पत्रबन्धनसाधनं सूत्रापरपर्यायं केवलं गुणरूपमर्थं सूचयति–इति। 'दोर' शब्दश्च भाषायाम् 'दोरो' नाम्ना प्रतीतः। 'दवरक' इति तु अस्यैव संस्कृतमुच्चारणम्। ○ कण्ठिके–पा० ५, भा० १। ○–के प्रष्ठके भा० २–के पुष्टके–जीवा० वि० पृ० २३७। * दवको–पा० ५-४। × क्वचित् 'धंमि' इति पाठः–भा० २। 8 विवरणकारदर्शितं पाठान्तरम्। ≈ मूले तु 'ववसायसभाए' इति भेदः।

उत्पन्नमात्रस्य सूर्याभस्य कर्तव्यविचारणा

उत्तरपुरत्थिमेणं एत्थ णं नंदा पुक्खरिणी पण्णत्ता हरयसरिसा, तीसे णं णंदाए पुक्खरिणीए उत्तरपुरत्थिमेणं मँहेगे बँलिपीढे पण्णत्ते सव्वरयणाँमए अँच्छे जाव पडिरूवे।

[१३२] तेणं कालेणं तेणं समएणं सूरियाभे देवे अहुणोववण्णमित्तए चेव समाणे पंचविहाए पज्जत्तीए पज्जत्तीभावं गच्छइ, तंजहा—आहारपज्जत्तीए सरीरपज्जत्तीए इंदियपज्जत्तीए आणपाणपज्जत्तीए भासा-मणपज्जत्तीए, तएँ णं तस्स सूरियाभस्स देवस्स पंचविहाएँ पज्जत्तीए

---

पातसभाया ७३ उत्तरपूर्वस्यां दिशि ७४ महदेकं ७५ बलिपीठं प्रज्ञप्तम्, तच्चाष्टौ योजनानि आयामविष्कम्भतः चत्वारि योजनानि बाहल्यतः ७६ सर्वरत्नमयम् ७७ 'अच्छे' इत्यादि प्राग्वत् [पृ० १९ पं० ५]। तस्य च ○बलिपीठस्य उत्तरपूर्वस्यां दिशि अत्र महत्येका नन्दा पुष्करिणी प्रज्ञप्ता, सा च ह्रदप्रमाणा, ह्रदस्येव च तस्या अपि त्रिसोपानवर्णनं तोरणवर्णनं च प्राग्वत् [पृ० ७८ पं० १, पृ० ७९ पं० १]। तदेवं यत्र यादृग्रूपं च सूर्याभस्य देवस्य विमानं तत्र तादृग्रूपं चोपवर्णितम्।

[१३२] सम्प्रति सूर्याभो देवः उत्पन्नः सन् यदकरोत् यथा च तस्याऽभिषेकोऽभवत् तद् उपदर्शयति—१ तस्मिन् काले २ तस्मिन् समये ३ सूर्याभो देवः सूर्याभे विमाने उपपात⊙सभायां देवशयनीये देवदूष्यान्तरिते प्रथमतोऽङ्गुलासंख्येयभा⁄गमात्रयाऽवगाहनया समुत्पन्नः ४ 'तए णं' इत्यादि सुगमम् नवरम् इह भाषा-मनःपर्याप्त्योः समाप्तिकालान्तरस्य प्रायः शेषपर्याप्तिसमाप्तिकालान्तरापेक्षया स्तोकत्वादेकत्वेन विवक्षणमिति 'पंचविहाए पज्जत्तीए पज्जत्तीभावं गच्छइ' इत्युक्तम्, ततः ५ तस्य सूर्याभस्य देवस्य ६ पञ्च-

---

○ मूले पूर्वं पुष्करिणीनिर्देशः पश्चात् बलिपीठनिर्देशः, विवरणे तु व्युत्क्रमः। ⊙ -तशय्यायां-भा० २। ⁄ --गद्वया अव-भा० २।

पज्जत्तीभावं गयस्स समाणस्स इमेयारूवे अज्झत्थिए चिंतिए पत्थिए मणोगए संकप्पे समुप्पज्जित्था-किं[11] मे पुव्विं करणिज्जं? किं[12] मे पच्छा करणिज्जं? किं मे[13] पुव्विं सेयं? किं मे[14] पच्छा सेयं? किं[15] मे पुव्विं पि पच्छा वि हियाए[16] सुहाए[17] खमाए[18] णिस्सेयसाए[19] आणुगामियत्ताए[20] भविस्सइ[21]?।

[१३३]तए णं तस्स सूरियाभस्स देवस्स सामाणियपरिसोववन्नगा देवा सूरियाभस्स देवस्स इमेयारूवमज्झत्थियं जाव [पृ० ५१ पं०१] समुप्पन्नं समभिजाणित्ता जेणेव सूरियाभे देवे तेणेव उवागच्छंति, सूरियाभं देवं करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु जएणं विजएणं वद्धाविन्ति वद्धावित्ता एवं वयासी-एवं खलु देवाणुप्पियाणं सूरियाभे विमाणे सिद्धायतणंसि जिणपडिमाणं जिणुस्सेहपमाणमित्ताणं अट्ठसयं संनिखित्तं चि-

विधया पर्याप्तया ७ पर्याप्तभावमुपगतस्य सतः ८ अयमेतद्रूपः ९ संकल्पः १० समुदपद्यत-'अज्झत्थिए' इत्यादि पदव्याख्यानं पूर्ववत् [पृ० ५१ पं० १ तथा ७] ११किं मे मम पूर्वं करणीयम्? १२किं मे पश्चात्करणीयम्? १३ किं मे पूर्वं कर्त्तुं श्रेयः? १४ किं मे पश्चात् कर्तुं श्रेयः? तथा १५ किं मे पूर्वमपि च पश्चादपि च १६ हिताय-भावप्रधानोऽयं निर्देशो-हितत्वाय--परिणामसुन्दरतायै १७ सुखाय शर्मणे १८ क्षमाय-अयमपि भावप्रधानो निर्देशः-संगतत्वाय १९ निःश्रेयसाय-निश्चितकल्याणाय २० अनुगामिकतायै-परम्परशुभानुबन्धसुखाय २१ भविष्यति-इति। इह प्राक्तनो ग्रन्थः प्रायोऽपूर्वः भूयानपि च पुस्तकेषु वाचनाभेदस्ततो माऽभूत् शिष्याणां सम्मोह इति क्वापि सुगमोऽपि यथावस्थितवाचनाक्रमप्रदर्शनार्थं लिखितः, इत ऊर्ध्वं तु प्रायः सुगमः प्राग्व्याख्यातस्वरूपश्च न च वाचनाभेदोऽप्यतिबादर इति स्वयं परिभावनीयः, विषमपदव्याख्या तु विधास्यते इति।

